# KUMARASAMBHAVA

BY

**KALIDASA,**

*(First Seven Cantos only)*

WITH THE COMMENTARY

OF

MALLINATHA

EDITED WITH ADDITIONAL NOTES AND
HISTORICAL ALLUSIONS

BY

KHETTRAMOHANA MOOKERJEE

AND

JAGANMOHANA TARKALANKARA

**Tarkalankara and Co**

CALCUTTA

PRINTED BY K. C. CHACKRAVARTY AT THE
KAVYAPROKASHA PRESS

1871

# कुमारसम्भवस्य पौराणिकानीतिवृत्तानि।

~~~~~~ ~~~~~~~~

## १ सर्गे १ श्लोकस्य।

अस्ति किल हिमालयाख्यया विश्रुत शैलराजो हि पूर्व्वस्या दिशि रुष्याख्यसुविस्तीर्ण-महादेशस्य पूर्व्वप्रान्तवर्त्ति-सागर पश्चिमस्या दिशि युरोपाभिधेयमहादेशस्य दक्षिणवर्त्ति सागरञ्चावगाह्य धरणीतल-मध्यवर्त्तिमहाप्राचीरवत् द्योतमान इति शास्त्रप्रसिद्धि। एतद्दक्षिणवर्त्ति-पारस्य-प्रभृति-विविध-जनपदा प्रथम हिमवर्ष-सञ्ज्ञया दक्षिणवर्षसञ्ज्ञया च पश्चात् भारतवर्षसञ्ज्ञयापि च विश्रुता इत्यामनन्ति पौराणिका। मार्कण्डेयादि-पुराणाना मते भारतवर्षस्य हि नव भेदा इन्द्रद्वीप, कसेरु, ताम्रपर्ण, गभस्तिमान्, नागद्वीप, सौम्य, गान्धर्व्व वारुण, सागरद्वीपश्चेति। अधुना भारतसञ्ज्ञया विख्यात पूर्व्वतन-भारतवर्षस्य नवम खण्ड प्रायश सागरपरिवृततया सागरद्वीपसञ्ज्ञयैव विश्रुत आसीत्।

कले प्रथममस्य सागरद्वीपस्य पूर्व्वप्रान्ते किराता, पश्चिमे यवना, दक्षिणे समुद्र, उत्तरे हिमवान्, मध्ये च ब्राह्मणा क्षत्रिया वैश्या शूद्राश्च यथास्थानम् आसन्। अस्य परिमाण दक्षिणादुत्तर-पर्य्यन्त सहस्रयोजनम। अत्र महेन्द्र मलय, सह्य, शुक्तिमान् ऋक्षपर्व्वत, विन्ध्य, पारियात्रश्चेति सप्तैव कुलाचला। एतदति-रिक्ता अपि बहवो महाशैला सन्ति। ते च कोलाहल वैभ्राज मन्दर-दर्दुर-वातधम-वैद्युत मैनाक-सुरस तुङ्गप्रस्थ-गोधन-पाण्डुराचल पुष्पगिरि-जयन्त रैवत अर्व्बुद ऋष्यमूक गोमन्त कूटशैल श्रीपर्व्वत चकोर प्रभृति सञ्ज्ञया विख्याता। अस्मिन् सागरद्वीपे हिमवन्नि सृता गङ्गा सरस्वती सिन्धु चन्द्रभागा यमुना शतद्रु वितस्ता ऐरावती कुहू गोमती धूतपापा बाहुदा दृषद्वती विपाशा-देविका वङ्क्षु, विशाला-गण्डकी-कौशिकी-प्रभृतय, पारियात्रशैलोद्भवा वेदस्मृतिमुखा
~~~~~~

विन्ध्यपर्व्वतसम्भवा नर्म्मदा-सुरसाद्या, ऋक्षपर्व्वतनिर्गतास्तापी पयोष्णी निर्विन्ध्याप्रमुखा, सह्यपादोद्भवा गोदावरी भीमरथी कृष्णा वेण्यादिका, मलयोत्पन्ना कृतमाला-ताम्रपर्णीप्रभृतय, महेन्द्राद्रि नि सृतास्त्रिसामा आर्य्यकुल्याद्या, शुक्तिमत्पादसम्भवा ऋषिकुल्या कुमारीप्रभृतयो बहुसंख्या नद्य सन्ति। आसा नदीना समीपे मध्य देशे, मत्स्या कुशूला कुल्या कुन्तला काशि कोशला अर्व्वुदाः पुलिन्दा समका वृका अन्ये च जनपदा सन्ति। उदीच्यास्तु जन पदा वाह्लीका वाटधाना आभीरा कालतोयका अपरान्ता शूद्रा पह्लवा चर्म्मखण्डिका गान्धारा यवना सिन्धव सौवीराः मद्रका शतद्रुहा ललित्था पारदा हारमूषिका माठरा रम्य-कृतका कैकया दशमानिका क्षत्रियोपनिवेशा वैश्यकुलानि शूद्र कुलानि काम्बोजा दरदा वर्वरा अङ्गलौकिका चीना तुषारा पह्लवा वाह्यतोयदा आत्रेया भरद्वाजा प्रस्थला दशेरका लम्पका सूनकारा चलिका जाङ्गला अपथा अलिमद्रा किराता तामसा हंसमार्गा काश्मीरा तङ्गणा चूलिका ऊहुका उर्णा दार्वाः अन्ये च। प्राच्यास्तु जनपदा, अन्ध्र राका मुद्गरा अन्तर्गिरय वहिर्गिरा प्लवङ्गा वङ्गा मलदा मलवर्त्तिका ब्रह्मोत्तरा प्रवि जया भार्गवा अङ्गा मद्रका प्राग्ज्योतिषा मद्रा विदेहा ताम्र लिप्ता मल्ला मगधा गोमेदास्तथान्ये च। दाक्षिणात्या जनपदास्तु, पाण्ड्या केरला चोला कुल्या सेतुका मूषिका कुमारा वान वासिका महाराष्ट्रा माहिषिका कलिङ्गा आभीरा ऐषीका आटव्या शवरा पुलिन्दा विन्ध्या मालेया वैदर्भा दण्डका पौरिका मौलिका अश्मका भोगवर्द्धना तैलिका कुन्तला अन्ध्रा उद्भिदा नालकारका अन्येऽपि च। पाश्चात्या जनपदास्तु, शूर्पा-रका कालनदा दुर्गा तालीयका कारस्करा लोहजङ्घा वाह्यार राजभद्रा तोसला कोशला त्रैपुरा विदिशा तुषारा तुम्बरा पाटव नैषधा पुलिन्दा सुशीला रूपसा तामसा कुरुमिणा कार-स्करा नासिका अन्तरनर्म्मदा मारव कच्छा समाहेया सारस्वता कच्छीया सुराष्ट्राः आवन्त्या आर्व्वुदा एते चान्ये च। विन्ध्यभूमि-

हिता जनपदास्तु उत्तमर्णा दशार्णा भोजा किष्किन्धा अनघा तुण्डिकेरा वीरहोत्रा अवन्तय एते चान्येच सन्ति। एतद्विस्तारो विष्णुपुराणे द्वितीयांशे तृतीयाध्याये मार्कण्डेयपुराणे च द्रष्टव्य ।

हिमालयपर्व्वतसंस्थान यथा मार्कण्डेयपुराणे "एतत्तु भारत वर्ष चतु सस्थानसस्थितम्। दक्षिणे परतो ह्यस्य पूर्व्वेण च महो दधि । हिमवान् उत्तरेणास्य कार्म्मु कस्य यथा गुण ॥' हिमालयो हि कार्म्मु काकृतेभारतवर्षस्य गुणस्वरूप इत्यर्थ ।

---

१ सर्गे २ श्लोकस्य।

देवादिभिदृशभिवर्गैस्तत् तत् स्वाभिमत पात्रम् उपादाय तत तत् स्वाभिमत पयो भूमि दुग्धा। एतेषा देवादीना तत् तद्योग-बलात् तज्जातीया एव वत्सविशेषा दोग्धृविशेषास्त्वाभवन। तमेव देवादिषु दोग्धृवत्सादिक्रम हरिवंशमतस्यायुक्त संक्षेपेण वक्ष्याम। देवानाम् इन्द्रो वत्स, मित्रो दोग्धा सौवर्ण पात्र बल क्षीरम। मुनीना सोमो वत्स, बृहस्पतिर्दोग्धा, छन्दासि पात्र, तपो ब्रह्म च क्षीरम। दैत्याना विरोचनो वत्स, द्विमूर्द्धा दोग्धा आयस पात्र, माया क्षीरम्। राक्षसाना सुमाली वत्स, जतुनाभो दोग्धा, कपाल पात्र, रुधिर क्षीरम्। अद्रीणा हिमवान वत्स, मेरुर्दोग्धा, शिलामय पात्रम्, ओषधीरत्न क्षीरम। गन्धर्व्वाणा चित्ररथो वत्स, विश्वावसुर्दोग्धा, पद्म पात्र, गन्ध क्षीरम्। उरगाणा तक्षको वत्स, धृतराष्ट्रो दोग्धा अलावु पात्र, विष क्षीरम्। यक्षाणा कुवेरो वत्स, सुवर्णो दोग्धा, आमम्रणमय पात्रम्, अन्तर्द्धान क्षीरम्। पितॄणा यमो वत्स अन्तको दोग्धा राजत पात्र स्वधा क्षीरम। वृक्षाणा प्लक्षो वत्स, शालवृक्षो दोग्धा, पालाश पात्र छिन्नसरोहण क्षीरम। तदुक्त हरिवंशे "देवा मितेन्द्रसौवर्णबल तु मुनयस्तथा। बृहस्पतीन्दुवेदैश्च तपो, दैत्या द्विमूर्द्धत ॥ विरोचनायसानाश्च माया रक्षोगणा अपि। जतुनाभसुमालिभ्याम् अस्रा रक्त ततोऽद्रय।

मेरुर्हिमाद्रि-शैलैस्तु रत्न, गन्धर्व्वजातय । सुरुक् चित्ररथाम्भोजै-गन्ध तु, भुजगास्तत । धृतराष्ट्र तक्षकालाबुभिश्च विषमुल्बणम् । यस्या सुकाञ्चनदामैरन्तर्द्धि पितृप्रजा । अन्तक प्रेतराट् रौप्ये स्वभामथ महीरुहा । शाल-प्लक्ष-पलाशैश्च छिन्नसरोहणा मुञ्ज । खदाग्ध्र-वत्सपातैस्ते तत तद्दुग्धसर्व्वराम् ॥" इति

पृथूपदेशेन पृथिवीदोहनकारणन्तु—पृथो पूर्व्वमराजकतया प्रनष्टास्वोषधिषु क्षुधार्दिता प्रजा प्रजापति पृथुमभिगम्य निवेदयामासु, राजन' इत पूर्व्वमराजकसमये धरित्र्या सकलौषधयो ग्रस्ता, तत सर्व्वा प्रजा क्षयमायान्ति । भवानस्माक वृत्ति प्रद प्रजापाल प्रजापतिना निरूपित । अतो भवान् क्षुतक्षामाणामस्माक वृत्ति निवर्त्तयितुमर्हतीति । अथ तदा तदाकर्ण्य कुपितो राजा दिव्य सशर शरासनमाजगवमादाय वसुन्धरामवधावत् । वसुन्धरा तु भयविक्लवा गोरूपमास्थाय पलायितुमुपचक्रमे । सा तु सप्तलोकमध्ये यत्र यत्र ययौ, तत्र तत्रैव पश्चादायान्त पृथुमुद्यतायुध ददृश । अथ तद्बाणपरित्राणपरायणा प्रवपमाना पृथु पृथपराक्रममाह वसुधा राजन् ! किमथ मा हन्तुमुद्यतायुधोऽसि ? स्त्रीबधेन ते महापातक भविष्यति । अहमेकमुपाय कथयामि, यदीच्छसि, तत् कुरुष्व । समस्ता ओषधयस्तु मया जीर्णा । अधुना तु तादृश वत्स प्रकल्पय, येनाह वत्सला क्षीर क्षरेयम । अधुना विषमम् अत कृषेरयोग्य भूतल सर्व्वत्र सम विधीयताम्, येनाह वरौषधिवीजभूत क्षीर सर्व्वत्र क्षरेयम । अथ राजा शतसहस्रश शैलानुत्सारयामास । नहि पूर्व्वयुगे विषमे पृथिवीतले नगराणा ग्रामाणा वा प्रविभाग आसीत् । पूर्व्व शस्योत्पादन पशुपालन वाणिज्य वा किमपि नाभूत् । पृथोरेवैतेषा सर्व्वेषा सम्भव । पूर्व्व प्रजाना फलमूलमात्रमाहारद्रव्यमासीत् । तदपि महता कृच्छ्रेणालभ्यत ।

अथ पृथु स्वायम्भुव मनु वत्स प्रकल्प्य स्वे पाणौ पृथिवी सर्व्वाणि शस्यजातानि दुदोह । अद्यापि सर्व्व प्रजास्तेनान्नेनैव वर्त्तन्ते । अथ देव दैत्य गन्धर्व्व-पितृ पर्व्वतादिभिस्तत् तत पात्र त।

त दोग्धृविशेष कल्पयित्वा तत् तत् स्वामिमतं पयो धरण्या दुग्धा। एव सर्व्वशैला हिमालय वत्सं, मेरु दोग्धार प्रकल्प्य पाषाणमय पात्रमादाय ओषधिरत्नरूप क्षीर दुदुहुरिति पुराणप्रसिद्धि-रिति। एतद्विस्तारो हरिवंशादौ विष्णुपुराणे प्रथमांशे १३ अध्याये चानुसन्धेय ॥ २ ॥

---

## १ सर्गस्य २ श्लोक ।

हिरण्यगर्भतनयादत्रे सोम सम्बभूव। तञ्च भगवानब्जयोनि रशेषौषधि-द्विज नक्षत्राणामाधिपत्येऽभ्यषेचयत्। सच राजसूय-मकरोत्। तत्प्रभावादत्युत्कृष्टाधिपत्याधिष्ठातृत्वाच्चैन मद आवि-वेश। तेन चासौ सकलदेवगुरोर्वृहस्पतेस्तारा नाम पत्नी जहार। बहुशश्च वृहस्पतिप्रार्थितेन भगवता ब्रह्मणा प्रार्थ्यमान सकलैश्च देवर्षिभिर्याच्यमानोऽपि न ता मुमोच। तस्य हि वृहस्पतिद्वेषादु-शना पार्ष्णिग्राहोऽभवत्।

यतश्चोशना, ततो हि समस्ता एव दैत्यदानवनिकाया महान्त-मुद्यम चक्रु। वृहस्पतेरपि सकलदेवसैन्यसहाय शक्रोऽभवत्। एवञ्च तयोरतीवोग्रस्तारकानिमित्त सग्राम प्रवव्रते। ततश्चा-सुरा सुरेषु सुरा असुरेषु शस्त्राणि मुमुचु। एवञ्च क्षुब्धमशेष जगत् ब्रह्माण शरण जगाम। पितामहश्च सर्व्वान् विनिवार्य वृह-स्पतेस्तारा प्रत्यदात्। वृहस्पतिरपि तामन्त प्रसवामवलोक्याह नैष मम क्षेत्रे भवत्यन्यसुतो धार्य, तदुत्सृजैनमलमतिधार्ष्ट्येनेति। सा च तेनैवमुक्ता पतिव्रता भर्त्तृवचनात् तमीषिकास्तम्बे गर्भमुत ससर्ज्ज। स चोत्सृष्टमात्र एवातितेजसा देवाना तेजास्याचिक्षेप। वृहस्पतिमिन्दु च तस्य कुमारस्यातिचारुतया साभिलाषौ दृष्ट्वा देवा ,समुत्पन्नसन्देहास्तारा पप्रच्छु, सत्य कथयास्माकमति-सुभगे! कस्यायमात्मज ? सोमस्याथ वृहस्पते ? इत्युक्तापि सा तारा ह्रिया न किञ्चिदुवाच। बहुशोऽप्यभिहिता यदासा देवेभ्यो

नाचचक्षे, तत कुमारस्तां प्रत्युमुद्यत, प्राह च, दुष्टे ! जननि कस्मान्मम तात नाख्यासि ? अद्यैव ते,लीकलज्जावत्या शास्तिम-मह करोमि ।

अथ भगवान पितामहस्तं कुमारं सन्निवार्य स्वयमपृच्छत्, ताराम् कथय वत्से ! कस्यायमात्मज ? सोमस्याथ बृहस्पते ? इत्युक्ता तारा लज्जाजडमाह, सोमस्येति । तत स्फुरदुच्छ्वसिता-मलकपोलकान्तिभगवान् शशाङ्कस्तमालिङ्ग्य कुमारं, साधु साधु वत्स ! बुधोऽसीति बुध इति नाम चक्रे इति । एतदेव विष्णुपुरा णादि-सम्मत शशलाञ्छनस्य लाञ्छनकारणम ।

---

## १ सर्गे १६ श्लोकस्य ।

सप्तर्षिमण्डल सर्व्वोपरि दृश्यते । मरीचिः, अत्रि पुलह, पुलस्त्य, क्रतु, अङ्गिरा, वशिष्ठ, एते सप्त ब्रह्मणो मानसपुत्रा । सम्भूति, अनसूया, क्षमा, प्रीति, सन्नति, अरुन्धति, लज्जा, एता सप्त सप्तर्षीणा पत्न्य ॥ पद्मपुराणे स्वर्गखण्डे ११ अध्याये एतद्वि स्तारो द्रष्टव्य ॥

---

## १ सर्गे २० श्लोकस्य ।

पुरा कृतयुगे सर्व्व एव शैला पक्षवन्तः शीघ्रगामिनश्चासन । ते तु गरुडा इव इतस्तत सर्व्वा दिशो व्रजन्ति स्म । अथ सहसा पर्व्वतपातेन ग्रामनगरादिध्वसात् भयाकुला देवा महाभयस्था भवन । अथ रोषपरतन्त्र कुलिशपाणि कुलिशपातेन सर्व्वेषा पर्व्वताना पक्षांश्चिच्छेद । हिमालयस्य मैनाकनामा कश्चित् पुत्र पवनस्य साहाय्येन तत्प्रियसखेनाम्भोनिधिना परिरक्षित इति । एतद्विस्तारो रामायणे सुन्दरकाण्डे प्रथमसर्गेऽनुसन्धेय ।

### १ सर्गे २१ श्लोकस्य ।

एकदा प्रजापतिर्दक्षो महासत्रमारेभे । स च भूतनाथमृते सर्व्वानेव सुरानाजुहाव, हव्यञ्च प्रददौ । अथ शिवा शिवस्याननुमत्या यज्ञदर्शनाय यज्ञभूमिमाजगाम । दक्षस्तु श्मशानवासिन्या समागमेन मे यज्ञभूमिरपवित्रेति मुहुर्मुहुरुवाच, वृषध्वजं विनिनिन्द च । तदा तदाकर्ण्य दाक्षायणी यज्ञाग्नौ प्रविवेश, दक्षसम्भूतमपवित्रं देहं परितत्याज च । अथ तदवगत्य भूतनाथः क्रोधपरीतो दक्षस्य यज्ञं विध्वंसयामासेति । एतद्विस्तारस्तु शैवपुराणे उत्तरखण्डे दशमादिकेष्वध्यायेषु द्रष्टव्यः ।

---

### १ सर्गस्य २७ श्लोके ।

हिमालयस्य शत पुत्रा आसन् । तथा च कालिकापुराणे ४० अध्याये—"औदेव्युवाच । शत पुत्राः सम्भवन्तु भवत्या वीर्यसंयुताः । तत्रैको बलवान् मुख्यः प्रथमं सम्भविष्यति । एवमुक्ता जगद्धात्री तत्रैवान्तरधीयत । मेनका च मुदं लब्ध्वा स्वस्थानं प्रविवेश ह । ततः काले तु सम्प्राप्ते मैनाकमचलोत्तमम् । पक्षोद्याः सह योऽद्यापि सिन्धुमध्ये प्रवर्त्तते । मेनका सुषुवे देवी देवेन्द्रं स्वद्वयागतम् । अन्यान् ऊनशत पुत्रान् क्रमात् सा सुषुवे च ह ॥" इति ॥

---

### द्वितीयसर्गे २८ श्लोकस्य ।

नेत्रसहस्रेण मेषाणां चक्षुषां सहस्रेणेति मल्लिनाथादयः सर्व्व एव विचक्षणा व्याचक्षते । वस्तुतस्तु सहस्रनेत्रस्य नेत्रसहस्रं नासीत् । तस्य हि सहस्रं सचिवा आसन् । एकैकसचिवस्तु तस्य एकैक-

नेत्रस्वरूप । नेत्रसहस्रस्वरूपैरसौ सचिवसहस्रैः सर्व्वाणि राज-कार्य्याण्यपश्यत्, पर्य्यालोचयच्च। तेनैव कारणेनासौ सहस्रनयन इति नाम्ना विख्यात इति वैदिकी प्रसिद्धिः। अमान्या पौरा णिकास्तु तस्मिन् मन्त्रिसहस्रपरिवृते देवराजे प्रकृतनेत्रसहस्र रोपाख्यानमारोपयामासु। एतत्प्रमाणन्तु अस्मत्प्रणीत कामन्दकी नीति टीकायामनुसन्धेयम्।

श्लोकस्यास्य तात्पर्य्य तु, मन्दानिलान्दोलितारविन्द-वृन्द सदृश वासवप्रेरित मन्त्रिसहस्र युगपदेव वृहस्पति वक्तार्य्य नि योजयामास, इति। परश्लोके तु, वृहस्पति सचिवसहस्रातिरिक्तो विशिष्टसचिव इति भाव ॥ २९ ॥

---

२ सर्गे ४१ श्लोके।

"यस्या दिशि स्थित शुक्रो जीवितेच्छुन ता व्रजेत्।" इति ज्योतिर्विद।

---

४ सर्गस्य ४१ श्लोके।

एकदा भगवान पितामह स्वसुता सन्ध्या निरुपमरूपवती युवती-मालोक्य पञ्चशरशरजर्ज्जरित-कलेवरो मूर्च्छित इव भूमौ पपात। सन्ध्या तु पितर सकाममालोक्य अधोमुखी व्रीडाभिभूता अन्तर्गृह प्राविशत्। अस्मापि कन्य मन्तर्गृहगता वीक्ष्य तत्रैव जगाम, जगाद च विनयावनत कृताञ्जलि, अये विलासिनि! तव कटाक्षेण मोहित मदनातुर मा त्राहि। मदनाम्बुधौ निमग्न मा समुद्धर। अधरामृतसेंकेन मे विरहाग्नि निर्वापय। सन्ध्योवाच, पित! धर्म्मणो धर्म्मनिष्ठापरस्य भवान् यद्येव पापमाचरेत, तदा पापेभ्यो विनिवर्त्तितु क समर्थो भविष्यति? अतो भवान् यत्नेन धर्म्म पा यतु। तदाकर्ण्याह च ब्रह्मा, यद्यालिङ्गनप्रदानेन मा विश्वस्य न

करोषि तदाह प्राणान् त्यक्ष्यामि इति। सन्ध्यैवाच स्वकन्यासम्भोगेन निर्णोविशेषात्ते मरणमेव श्रेय । सन्ध्या इत्येव बहुविधमुक्त्वा वसनेन वदनकमलमाच्छादयत्। मदनबाणविमोहितो ब्रह्मा च बलन् तामालिलिङ्ग। सन्ध्या चोपायान्तरमपश्यन्ती ब्रह्माणं निक्षिप्य मृगी भूत्वा पलायितुमुपचक्रमे। ब्रह्मापि मृगो भूत्वा मृगीभूता सन्ध्यामन्वधावत्। सन्ध्या च यत्र यत्र जगाम, तत्र तत्रैव मृगरूप पापाचारनिरत पितर ददर्श। अथ सा परित्राणार्थिनी देवराज शरण ययौ अस्मिन् कर्म्मणि तिरश्चां न दोष इति तिर्य्यक्रूपिणा ब्रह्मणा कथिते देवराज "धर्म्मज्ञो भवान यथेच्छ कुरु' इत्येवमेवोवाच। अथ ब्रह्मा पुनरपि सन्ध्यामन्वधावत्। इत्येव बहूनि वर्षाण्यतीतानि। अथैकदा भगवान् महेश्वरस्तमवलोक्य चिन्तयामास बहुकालमाकाशमण्डले धावन्ती मृगीय का? कस्माय मृग पश्चात परिधावति। अथासौ योगबलेन ब्रह्माण दुष्टिगमनाथन परिज्ञाय धर्म्मसरक्षणाय शरेणास्य शिरश्चिच्छेद। सन्ध्या तु पुनरपि स्वरूपमास्थाय सत्यलोकमगमत्। मृगरूपिणो ब्रह्मण शरीर भूमावपतत्। शिरस्तु नभोमण्डल एव तस्थौ। तदद्यापि मृगशिरो नक्षत्ररूपेण दृश्यते। अथ शिवानुग्रहेण ब्रह्मा स्वरूपमुपलभ्य पर निर्वेदमापन्न स्वकृत दुष्कृत मुहुर्मुहुर्विनिनिन्द। एतद्विस्तारः शिवपुराणादावनुसन्धेय ॥ ४१ ॥

---

## ६ सर्गस्य ८ श्लोके।

'चतुर्युगान्ते वेदाना जायते किल विप्लव । प्रवर्त्तयन्ति तानेत्य भुवि सप्तर्षयो दिव ॥" इति विष्णुपुराण-तृतीयांशस्य २ अध्याये।

---

## ७ सर्गे २० श्लोकस्य।

"ब्रह्माण्या मातर स्मृता" इति भागरि। "ब्राह्मण्याद्या मातर

सप्त" इति हेमचन्द्र। एतदनुसारेण टीकाकृता मल्लिनाथेन "सप्त मातरः" इत्युक्तम्। "ब्रह्माण्याद्याः स्मृताः सप्त देवता मातरो बुधैः" इति हलायुधः। "स हि ब्रह्माणी वैष्णवी चैन्द्री रौद्री वाराहिकी तथा। कौवेरीत्यपि कौमारी सप्तैव मातरः स्मृताः इति पठति' इति भानुजीदीक्षितः। "सव्वधरादयस्तु 'ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा। कौमारीत्यपि कौवेरी सप्तैता मातरः स्मृताः इति आहुः" इति रायमुकुट-भरतमल्ल रमानाथ-क्षीरस्वामिनः। "सप्त मातरः इति सुभूति-नरसिंहौ" इति मथुरेशः। "ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा, वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः॥" इति भुवनेश्वरी स्तोत्रटीका।

'ब्राह्मीत्याद्यास्तु मातरः" इत्यस्य टीकायां "ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा। कौमारीत्यपि चामुण्डा चर्चिकेत्यष्ट मातरः" इति भानुजीदीक्षितः। भगीरथ मथुरेश-भरतमल्ल-रमानाथ क्षीरस्वामि रायमुकुटादीनां मतेऽपि अष्ट मातरः। शब्दस्तोम-महानिधौ तु "ब्राह्मी माहेश्वरी चण्डी वाराही वैष्णवी तथा। कौमारी चैव चामुण्डा चर्चिकेत्यष्टमातरः॥" इति। नामव्यत्ययोऽपि दृश्यते। "ब्रह्माणी वैष्णवी रौद्री वाराही नारसिंहिका। कौमारी चापि माहेन्द्री चामुण्डा चैव चण्डिका॥" इति रत्नमालाविवृतिः।

वराहपुराणसम्मता मातृकागणोत्पत्तिर्यथा—एकदा भगवान् अन्धकरिपुरन्धकनामानमसुरं त्रिशूलेनाहनत्। तेन तस्य भूतले पतितैः शोणितविन्दुभिरसङ्ख्याता अन्धकाः सम्बभूवुः। तदवलोक्य महदाश्चर्य्यं भगवान् रुद्रः शूलेनैव तमन्धकमचिक्षेप। नारायणस्तु रुधिरसमुद्भूतान् अन्धकान् चक्रेणैव निजघान। अथोत् क्षिप्तस्य शूलप्रोतस्य तस्य अन्धकस्य रुधिरविन्दवः पुनरपि भूमौ पतन्तीति दृष्ट्वा क्रुद्धस्य शङ्करस्य मुखात् ज्वाला विनिर्ययौ। एतन्मूर्त्तिरेव योगीश्वरी। अथ ब्रह्म-विष्णु कार्त्तिकेय प्रभृतिभिरपि अन्याः सप्त मूर्त्तयो विनिर्म्मिताः। एता एव अष्ट मातरः। आभिरेवान्धकस्य शोणितधारा विशोषिता। तथा चोक्तं वराहपुराणे "कामः क्रोधस्तथा लोभो मदो मोहोऽथ पञ्चमः। मात्सर्य्यं षष्ठ

मित्याङ्ग पैशुन्य सप्तम तथा। अनसूयाष्टमी ज्ञेया इत्येता अष्ट मातरः। काम योगीरी विद्धि क्रोध माहेश्वरी तथा। लोभस्तु वैष्णवी प्रोक्ता ब्रह्माणी मद एव च। मोह स्वयन्तु कौमारी मात्सर्य्य चैन्द्रजा विदु। यामी दण्डधरा देवी पैशुन्य स्वयमेव च। अनसूया वराहाख्या इत्येता परिकीर्त्तिता ॥" इति।

मार्कण्डेयपुराणमते—ब्राह्मी ब्रह्मण शक्ति मूर्त्तिमती हंसारूढा। माहेश्वरी महेश्वरस्य शक्तिर्वृषारूढा। ऐन्द्री इन्द्रस्य शक्तिरैरावता रूढा,वज्रहस्ता च। वैष्णवी विष्णो शक्तिर्गरुडारूढा शङ्खचक्रादि-हस्ता च इत्यादि। एतन्मते यावत्सङ्ख्या देवास्तावत्सङ्ख्या एव देवशक्तयस्ता एव मातर इति। एतद्विस्तारो मार्कण्डेयपुराणेऽनु-सन्धेय।

---

## ७ सर्गे २८ श्लोकस्य।

काली भगवत्या मूर्त्तिभेद। एकदा शुम्भनिशुम्भपीडिता सर्व्व एव देवा हिमालयस्य गङ्गाप्रपातसन्निधौ महामाया प्रतुष्टुवु। अथ सर्व्वामरै संस्तुता देवी मातङ्गवनितारूपमास्थाय देवानपृच्छत् केय किमथ स्तूयते युष्माभि ? किमर्थञ्च यूयमत्र मातङ्गाश्रमे समा-गता ? इत्येव ब्रुवन्त्या एव तस्या मातङ्ग्या शरीरतो भगवती काली प्रादुरासीत् जगाद च देवाः सर्व्वे शुम्भनिशुम्भ प्रपीडिता मामेव स्तुवन्ति। मातङ्ग्या शरीरतो देव्या निःसृताया कृष्णा मातङ्गी गौरी बभूव। उद्भूता देवी च कालीति नाम्ना विख्याता भिन्नाञ्जननिभाभवत्। इति कालिकापुराणे उत्तरतन्त्रे ६० अध्याय। अस्या ध्यानन्तु तन्त्रेोक्त यथा—"चतुर्भुजा कृष्णवर्णा मुण्डमालाविभूषिताम। खड्ग दक्षिणपाणिभ्या बिभ्रतीन्दीवर द्वय। कर्त्रीञ्च खर्परञ्चैव क्रमाद्वामेन बिभ्रतीम्। द्या लिखन्ती जटामेका बिभ्रती शिरसा स्वयम। मुण्डमालाधरा शीर्षे ग्रीवा-यामपि सर्व्वदा। वक्षसा नागहारन्त बिभ्रती रक्तलोचनाम।

कृष्णवस्त्रधरा कण्ठा व्याघ्राजिनसमन्विताम। वामपाद शवहृदि संस्थाप्य दक्षिण पदम। विन्यस्य सिंहपृष्ठे तु लेलिहानासव स्वयम। साट्टहास महाघोर रावयुक्तातिभीषणा। चिन्त्योग्रतारा सतत भक्तिमद्भि सुखेप्सुभि॥" य इति। अम्बिकाललाटसम्भूता अन्यापि काली पूज्यते। तस्या रूप यथा तत्रैव—'देव्या ललाटसम्भूता या कालीति च विश्रुता। नीलोत्पलदलश्यामा चतुर्बाहुसमन्विता। खट्टाङ्ग चन्द्रहासञ्च बिभ्रती दक्षिणे करे। वामे चर्म च पाशञ्च ऊर्द्धाधोभावत पुन। दधती मुण्डमालाञ्च व्याघ्रचर्मवराम्बरा। कृशाङ्गी दीर्घदंष्ट्रा च अतिदीर्घातिभीषणा। लोलजिह्वा निम्नरक्तनयना नादभैरवा। कबन्धवाहना पीन विस्तारश्रवणानना। एषा ताराख्या देवी चामुण्डेति च कथ्यते॥' मततप्रमाणान्तर यथा मार्कण्डेयपुराणे देवीमाहात्म्ये—"तत कोप चकारोच्चैरम्बिका तानरीन् प्रति। कोपेन चास्या वदन मसीवर्ण मभत्तदा। भ्रुकुटीकुटिलात् तस्या ललाटफलकात द्रुतम्। काली करालवदना विनिष्क्रान्तासिपाशिनी॥" इति। अस्या ध्यान यथा "काली करालवदना विनिष्क्रान्तासिपाशिनी। विचित्रखट्टाङ्ग-धरा नरमालाविभूषणा। द्वीपिचर्मपरीधाना शुष्कमांसातिभैरवा अतिविस्तारवदना जिह्वाललनभीषणा। निमग्नारक्तनयना नादापूरितदिङ्मुखा॥" इति।

---

## सप्तमसर्गे ७८ श्लोके।

सूर्यस्य भूमण्डलप्रदक्षिणीकरणेन भूमण्डलस्यात्मपरिवर्त्तनेन वा अन्योन्यससक्त रात्रिन्दिव नियत सुमेरु परित परिभ्रमति। "सर्व्वेषामेव वर्षाणा मेरुरुत्तरत स्थित" इति न्यायात् ज्योतिर्विदा मते दिवाकरस्य भूमण्डलप्रदक्षिणीकरणेन पौराणिकाना मते मेरु प्रदक्षिणमेव सिध्यति॥ ७८॥

---

# कुमारसम्भवम्

प्रथम सर्ग ।

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराज ।

मातापितृभ्यां जगत नमो वामार्द्धजानये ।
सद्यो दक्षिणदृक्पात सङ्कुचद्वामदृष्टये ॥

अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
त नर वपुषि कुञ्जर मुखे मन्महे किमपि तुन्दिल मह ॥
शरण करवाणि शर्मद ते चरण वाणि । चराचरोपजीव्यम ।
करुणामसृणै कटाक्षपातै कुरु मामम्ब । कृतार्थसार्थवाहम् ॥

इहान्वयमुखेनैव सर्व्व व्याख्यायते मया ।
नामूल लिख्यते किञ्चित नानपेक्षितमुच्यते ॥
भारती कालिदासस्य दुर्व्याख्याविषमूर्च्छिता ।
एषा सञ्जीवनी व्याख्या तामद्योज्जीवयिष्यति ॥

तत्रभवान् कालिदास कुमारसम्भव काव्य चिकीर्षु 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इति शास्त्रात् काव्यादौ वक्ष्यमाणार्थानुगुण वस्तु निर्दिशति, अस्तीति । (उत्तरस्या दिशि,) अनेनास्य देवभूमित्व सूच्यते,( देवता आत्मा

पूर्व्वापरौ तोयनिधी[१] वगाह्य[२]
स्थित पृथिव्या इव मानदण्ड ॥ १ ॥

अधिष्ठाता यस्य स ,, एतेनास्य वक्ष्यमाणमेनकापरिणयपार्व्वती-जननादिचेतनव्यवहार-योग्यत्वसिद्धि ।(हिमस्य आलय स्थानम् इति हिमालय नाम हिमालय )इति प्रसिद्ध ।अधिक राजा अधिराज 'राजाहस्सखिभ्यष्टच' न गच्छति इति नगा अचला तेषाम् अधिराज नगाधिराज अस्ति/। कथम्भूत ?'पूर्व्वापरौ प्राच्यपश्चिमौ/ तोयनिधी समुद्रौ/ वगाह्य प्रविश्य/ अत एव पृथिव्या भूमे मान हस्तादिना परिच्छेद । भावे ल्युट् । तस्य दण्ड , यद्वा मीयते अनेन इति मान )। करणे ल्युट ।(स चासौ दण्डश्च स इव। स्थित आयामपरिच्छेदकदण्ड इव स्थित इत्यर्थं । पूर्व्वापरसागरावगाहित्वञ्चास्य हिमालयस्य अस्त्येव । उक्तञ्च ब्रह्माण्डपुराणे, 'कैलासो हिमवांश्चैव दक्षिणे वर्ष-पर्व्वतौ । पूर्व्वपश्चायतावेतावर्णवान्तरुपस्थितौ ॥' अत्र हिमाचलस्य उभयाब्धिव्याप्तिसाम्यात् मानदण्डत्वेन उत्प्रेक्षणात् उत्प्रेक्षालङ्कार 'प्रकृते अप्रकृतगुणक्रियादिसम्बन्धादप्रकृतत्वेन प्रकृतस्य सम्भावनमुत्प्रेक्षा' इति अलङ्कारसर्व्वस्वकार । अस्मिन सर्गे प्रायेण वृत्तम् उपजाति, क्वचित् इन्द्रवज्रोपेन्द्रवज्रे च । तल्लक्षण तु, 'स्यादिन्द्रवज्रा यदि तौ जगौ ग । उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता ॥' इति ॥ १ ॥

१ तोय जल निधीयते ययो तौ। निपूर्व्वात् धाध तोरधिकरणे इ ।

२ अवपूर्व्वात् गाहूधातो क्त्वाचस्थाने यप् 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो ' इति स्मरणात् अत्र इत्युपसर्गस्यास्य आदे अकारस्य लोपश्च ।

य सर्व्वशैला परिकल्प्य वत्स
मेरौ स्थिते दोग्धरि१ दोहदचे२
भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टा दुदुहुर्धरित्रीम् ॥ २ ॥

इत पर षोडशभि श्लोकैर्हिमाद्रि वर्णयति, तत्र नगाधिरात्र निर्दोढमाह, यमिति । (सर्व्वे च ते शैलाश्च सर्व्वशैला । 'पूर्व्वकालैकसर्व्वजरत्पुराणनवकेवला समानाधिकरणेन' इति समास । य हिमालय वत्स परिकल्प्य विधाय दोहदचे दोहनसमर्थे मेरौ दोग्धरि स्थिते सति।'यस्य च भावेन भावलक्षणम्' इति सप्तमी । पृथूपदिष्टा पृथुना वेणेन उपदिष्टां ईदृक्तया प्रदर्शिता धरित्री गोरूपधराम् इति शेषः 'गौर्भूत्वा तु वसुन्धरा' इति विष्णुपुराणात 'अकथितञ्च' इति कर्म्मत्वम् । भास्वन्ति च भास्वत्यश्च भास्वन्ति द्युतिमन्ति, ओषधिविशेषणश्चैतत् 'नपुसकमनपुसकेन' इत्यादिना नपुसकैकशेष । (रत्नानि मणीन जातिश्रेष्ठवस्तूनि च)'रत्न श्रेष्ठे मणावपि' इति विश्व । 'जातौ जातौ यदुत्कृष्ट तद्रत्नमिति कथ्यते' इति यादव । महौषधीश्च सञ्जीवनीप्रभृतीश्च क्षीरत्वेन परिणता इति शेष, 'ता क्षीरपरिणामिनी' इति विष्णुपुराणात् । दुदुहु 'दुहियाचि इत्यादिना द्विकर्म्मकत्वम् । अत्र प्रयोजकत्वेऽपि शैलाना 'पञ्चभिर्हलै कर्षति ग्राम ग्रामणी' इतिवत् तत्समर्थाचरणात् कर्तृत्वेन व्यपदेश 'दुहे स्वरितेत्त्वेऽपि' अकर्त्रभिप्रायविवक्षाया परस्मैपदम् । अत्रार्थे प्रमाणम्, 'गौर्भूमिरचला सर्व्वे कर्त्तारोऽत्र पयासि च । ओषध्यश्चैव भास्वन्ति रत्नानि विविधानि च ।

१ दोहनकर्त्तरि दुह्धातो कर्त्तरि तृच् ।
२ दोहे दोहनकर्म्मणि दक्ष तस्मिन ।

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते१
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ ३ ॥

वत्सस्य हिमवानासीत दोग्धा मेरुर्महागिरि ॥' इति। एतेन वत्सस्य मातु प्रेमास्पदत्वादस्य सारग्राहित्व गम्यते, तथाचास्य नगस्य रत्नविशेषभोक्तृत्वान्नगाधिराजत्व युक्तम् इति भाव। अत्र हिमवद्वर्णनस्य प्रकृतत्वात् तद्गतौषधिरत्नाना दयानामपि प्रकृतत्वात् तेषां दोहनक्रियारूपसमानधर्मसम्बन्धात् औपम्यस्य गम्यत्वात केवलप्राकरणिकविषयतुल्ययोगिता नामालङ्कार। तदुक्तम 'प्रस्तुताना तथान्येषा केवल तुल्यधर्मत। औपम्य गम्यते यत्र सा मता तुल्ययोगिता॥' न चात्र रूपकपरिणामाद्यलङ्कारशङ्का कार्य्या, तेषामारोपहेतुत्वात् हिमहेमाचलादिषु वत्सत्वदोग्धृत्वादीनामागमसिद्धत्वेनानारोप्यमाणत्वादिति ॥२॥

ननु हिमदोषदूषितस्य तस्यात्यन्तमनभिगम्यत्वाच्छित्रिण इव सर्व्वमपि सौभाग्य विफलमित्याशङ्क्याह, अनन्तेति। प्रभवति अस्मात् इति प्रभव कारणम अनन्तानाम अपरिमिताना रत्नाना श्रेष्ठवस्तूना प्रभवस्य यस्य हिमाद्रे हिम कर्तृ सुभगस्य भाव सौभाग्यम 'हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य' इति उभयपदवृद्धि। तत् विलुम्पति इति सौभाग्यविलोपि सौन्दर्य्यविघातकं न जात न अभूत्। तथाहि, एक दोष गुणसन्निपाते, इन्दो किरणेषु अङ्क इव, निमज्जति अन्तर्लीयते इत्यर्थ, न हि स्वल्पो दोषोऽमितगणाभिभावक एव किन्तु कश्चिदिन्दुकलङ्का

---

१ गुणानां सन्निपात तस्मिन् गुणसमवाये बहुगुणेषु मध्ये इत्यर्थ न गुणा गुणाश्रय' इति न गुणेषु गुणक्रिये' इति च न्यायात गुण दोषयो किरणाङ्कयोश्च न आधाराधेयभाव।

यश्चाप्सरोविभ्रममण्डनानां
सम्पादयित्रीं शिखरैर्बिभर्त्ति।
बलाहकच्छेदविभक्तरागाम्१
अकालसन्ध्यामिव धातुमत्ताम्॥ ४ ॥

दिवत् गुणैरभिभूयते अन्यथा सर्व्वरम्यवस्तुहानिप्रसङ्गात् इति भाव। अत्रोपमानुप्राणितोऽर्थान्तरन्यासालङ्कार। तल्लक्षणं तु 'ज्ञेय सोऽर्थान्तरन्यास वस्तु प्रस्तुत्य किञ्चन। तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुन॥' इति दण्डी॥ ३॥

यश्चेति। किञ्च इति चकारार्थ। य हिमाद्रि अप्सरसां विभ्रममण्डनानि विलासालङ्करणानि, अथवा विभ्रम विपरीत न्यास 'विभ्रमस्त्वरया काले भूषास्थानविपर्य्यय' इति दशरूपकात्। तेन मण्डनानि तेषां सम्पादयित्रीम्, एतद्धातुरागदर्शिन्योऽप्सरस सन्ध्याभ्रमेण प्रसाधनाय त्वरयन्ति इति भाव। तथात्वे भ्रान्तिमदलङ्कारो व्यज्यते। 'कर्तृकर्म्मणो कृति इति कर्म्मणि षष्ठी। वलीनां वाहका बलाहका। पृषोदरादित्वात् साधु। तेषां छेदेषु खण्डेषु विभक्त सङ्क्रमित राग यया ताम्, एतेन अद्रेरभ्रङ्कषत्वं गम्यते। इद विशेषणद्वय सन्ध्यायामपि योज्यम्। धातव सिन्दूरगैरिकादय अस्य सन्ति इति धातुमान। नित्ययोगे मतुप्। तस्य भाव धातुमत्ता, तां, धातुयोगित्वमिति सम्बन्धोऽपि वाच्यार्थः 'समासकृत्तद्धितेषु सम्बन्धाभिधानं भावप्रत्ययेन' इति वचनात्। लक्षणया नित्यानुषङ्गिकधातुम् इत्यर्थ। (अकालसन्ध्याम् इव अनियतकालप्राप्तसन्ध्याम् इव) शिखरै बिभर्त्ति धत्ते। अत्र सन्ध्याशब्दस्य जातिवाचित्वात् जात्युत्प्रेक्षा॥ ४॥

---

१ रागः रक्तता लौहित्यम् इति यावत्।

आमेखल सञ्चरता घनाना
छायामध सानुगता निषेव्य ।
उद्वेजिता१ वृष्टिभिराश्रयन्ते
शृङ्गाणि यस्यातपवन्ति सिद्धा ॥ ५ ॥
पद तुषारस्रुतिधौतरक्त
यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।

आमेखलमिति । सिद्धा अणिमादिसिद्धा देवयोनि विशेषा 'पिशाचो गुह्यक सिद्ध भूतोऽमी देवयोनय ' इत्यमर । (आ मेखलाभ्य आमेखल नितम्बपर्यन्तम्) 'मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयो ' इति विश्व । 'आङ् मर्य्यादाभिविध्यो ' इति अव्ययीभाव । सञ्चरता घनाना मेघानाम् (अध सानूनि मेघमण्डलात् अधस्तटानि गता प्राप्ताम्) 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नै ' इति समास । (छाया' अनातपम्) 'छाया सूर्य्यप्रिया कान्ति प्रतिविम्बमनातपम्' इत्यमर । निषेव्य वृष्टिभि (उद्वेजिता क्लेशिता ) सन्त 'उद्वेग स्तिमिते क्लेशे भये मन्थरगामिनि' इति शब्दार्णवे। (यस्य हिमाद्रे (आतपवन्ति सातपानि ) शृङ्गाणि आश्रयन्ते आश्रित्य स्थिता इत्यर्थ , अतिमेघमण्डलमस्यौन्नत्यम् इति भावः ॥ ५ ॥

पदमिति । (यस्मिन् अद्रौ) किराता (तुषारस्रुतिभि हिम निष्यन्दै धौत चालित रक्त शोणित यस्य तत्) तथोक्तम्, अतो दुर्ग्रहम् इति भाव. । (हता द्विपा गजा ये तेषा हतद्विपानां) (केशरिणां सिंहाना) (पद पादक्षेपस्थानम्) अदृष्ट्वा अपि (नखरन्ध्रै नखद्रोणिभि मुक्तै मुक्ताफलै) मार्ग विदन्ति जानन्ति । अत्र व्याधा सिंहघातिन गजेन्द्राश्च मुक्ताकरा इति भाव , 'करीन्द्र-

---

१ चिजम्नात् उत्पश्चात् विजभातो कर्म्मणि ता ।

विदन्ति मार्गं नखरन्ध्रमुक्तै
मुक्ताफलै केशरिणा किराता[1] ॥ ६ ॥
न्यस्ताक्षरा धातुरसेन यत्र
भूर्जत्वच कुञ्जरविन्दुशोणा ।
व्रजन्ति विद्याधरसुन्दरीणाम्
अनङ्गलेखक्रिययोपयोगम् ॥ ७ ॥
य. पूरयन् कीचकरन्ध्रभागान्
दरीमुखोत्थेन[2] समीरणेन ।

जीमूतवराहशङ्खमत्स्या हि शुक्तयुङ्गववेणुजानि। मुक्ताफलानि प्रथितानि लोके तेषान्तु शुक्तयुङ्गवमेव भूरि ॥' ॥ ६ ॥

न्यस्तेति। (यत्र हिमाद्रौ) धातुरसेन सिन्दूरादिद्रवेण, 'शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस' इत्यमर। न्यस्ताक्षरा लिखितवर्णा,) अत एव कुञ्जरस्य ये विन्दव )कार्य्ये वयोविशेषभाविन पद्मकाख्या 'पद्मक विन्दुजालकम्' इत्यमर। ते इव शोणा रक्तवर्णा लिखितभागेषु इति शेष भूर्जत्वच भुजपत्रवल्कलानि) 'भजपत्रो भुजो भूर्ज्जो मृदुत्वक् चर्म्मिका अपि' इति यादव। विद्याधरसुन्दरीणा(लिख्यन्ते येषु ते लेखा पत्रिका अनङ्गस्य लेखा तेषा क्रियया कामव्यञ्जकलेखकरणेन)इत्यर्थ (उपयोगम् उपकार) व्रजन्ति, दिव्याङ्गना विहारयोग्योऽस्य शैल इति भाव ॥ ७ ॥

---

१ किर पर्य्यन्तभूमिम् अर्तन्ति गच्छन्ति शकुनिमृगादिबन्धनाथम् इति शेष द्रे ते किराता व्याधा ।

२ उत्तिष्ठति उत्पद्यते य स उत्थ । उतपूर्व्वात् स्थाधातो कर्त्तरि ड उत परस्य स्था इत्यस्य सकारलोपश्च ।

उद्गास्यतामिच्छति किन्नराणां१
तानप्रदायित्वमिवोपगन्तुम् ॥ ८ ॥
कपोलकण्डूः करिभिर्विनेतुं
विघट्टितानां सरलद्रुमाणाम्।

य इति। यः हिमाद्रिः, दरी गुहा सा एव मुखं तस्मात् उत्थेन उत्पन्नेन 'आतश्चोपसर्गे' इति कप्रत्ययः। समीरणेन वायुना कीचका वेणुविशेषाः 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः। तेषां रन्ध्रभागान् छिद्रप्रदेशान् पूरयन् धमयन्, वांशिकोऽपि वंशरन्ध्राणि मुखमारुतेन पूरयति इति प्रसिद्धिः। उद्गास्यतां देवयोनित्वात् उच्चैः गान्धारग्रामेण गानं करिष्यताम्। उक्तञ्च नारदेन 'षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः। न तु गान्धारनामानं स लभ्यो देवयोनिभिः॥' इति। किन्नराणां देवगायकानां तानप्रदायित्वं तानो नाम स्वरान्तरप्रवर्त्तकः रागस्थितिप्रवृत्त्यादिहेतुः अंशापरनामा वंशवाद्यसाध्यः प्रधानभूतः स्वरविशेषः 'तानस्त्वंशस्वरो मतः' इति अभिनवगुप्तः। 'गाता यं यं स्वरं गच्छेत् तं तं वंशेन तानयेत्' इति भरतः। तत्प्रदानशीलत्वं तानप्रदायित्वं वांशिकत्वम् उपगन्तुम् इच्छति इव, इत्युत्प्रेक्षा। सा च दरीमुखोत्थेनेति एकदेशविवर्त्तिरूपकोज्जीविता मुखसाध्यत्वात् तानप्रदायित्वस्य यत्नावयवरूपणाद्वयविरूपणा गम्यते तदेकदेशविवर्त्ति रूपकम्। गम्यते चात्र अवयविनः पुंसो रूपणं यच्छब्दनिर्दिष्टे हिमाद्रौ, इत्यलं बहुना ॥ ८ ॥

कपोलेति। यत्र हिमाद्रौ करिभिः गजैः कपोलकण्डूः गण्डस्थलकण्डूः विनेतुम् अपनेतुं विघट्टितानां घर्षितानां

---

१ कुत्सिता नराः, किन्नराः तेषाम्।

यत्र स्रुतक्षीरतया१ प्रसूत
सानूनि गन्धः सुरभीकरोति ॥ ९ ॥
वनेचराणां वनितासखानां
दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्याम्
अतैलपूराः सुरतप्रदीपाः ॥ १० ॥

सरलद्रुमाणां सम्बन्धिन्या स्रुतानि करिकपोलघर्षणात् चरितानि क्षीराणि येषां तेषां भावः तत्ता तया हेतुना प्रसूतः उत्पन्नः गन्धः सानूनि सुरभीकरोति, एतेनास्य गजाकरत्वं गम्यते। तथा च गजायुर्वेदे, 'हिमवद्विन्ध्यमलया गजानां प्रभवा नगाः।' इति ॥ ९ ॥

वनेचराणामिति। यत्र हिमाद्रौ रजन्यां दर्य्यः कन्दराः एव गृहाः तेषाम् उत्सङ्गेषु अभ्यन्तरेषु निषक्ताः सङ्क्रान्ताः भासः यासां ताः ओषधयः तृणज्योतींषि 'अग्नावोषधिषु च तेजो निधाय रविरस्तं यातीत्यागमः। वनितानां सखायः वनितासखाः 'राजाहःसखिभ्यष्टच्' तेषां रममाणानाम् इत्यर्थः, वने चरन्ति इति वनेचराः (किराताः) 'चरेष्टः' इति टप्रत्ययः 'तत्पुरुषे कृति बहुलम्' इति अलुक्। (तेषां) वनेचराणाम् अतैलपूराः अनपेक्षिततैलसेकाः इत्यर्थः सुरते सुरतकर्म्मणि प्रदीपाः भवन्ति। अत्र ओषधिषु आरोप्यमाणस्य प्रदीपत्वस्य प्रकृतसुरतोपयोगित्वात् परिणामालङ्कारः। तदुक्तम्, 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति। तथा प्रदीपकारणतैलपूरणनिषेधादकारणकार्य्योत्पत्तिलक्षणा विभावना च इत्युभयोः संसृष्टिः ॥ १० ॥

---

१ चरितक्षीरेण इत्यर्थः। क्षीरस्य दुग्धभवत्व इत्यरस ।

उद्वेजयत्यङ्गुलिपार्ष्णिभागान्
मार्गे शिलीभूतहिमेऽपि यत्र।
न दुर्वहश्रोणिपयोधरार्त्ता
भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥ ११ ॥
दिवाकराद्रक्षति यो गुहासु
लीनं[१] दिवाभीतमिवान्धकारम्।

उद्वेजयतीति। (यत्र हिमाद्रौ, (शिलीभूत घनीभूत हिम यत्र तस्मिन्) अत एव (अङ्गुलीना पार्ष्णीना च भागान प्रदेशान उद्वेजयति अतिशैत्यात् क्लेशयति अपि) मार्गे श्रोणयश्च पयोधराश्च श्रोणिपयोधर दुर्वहेण दुर्द्धरेण श्रोणिपयोधरेण आर्त्ता पीडिता। आङ्पूर्व्वादृच्छते क्त, उपसर्गादृति धातौ' इति वृद्धि। अश्वाना मुखानि इव मुखानि यासा ता अश्वमुख्य किन्नरस्त्रिय। उष्ट्रमुखवत् समास, 'स्यात् किन्नर किम्पुरुष तुरङ्गवदनो मयु' इत्यमर। मन्दा मन्थरां गति न भिन्दन्ति न त्यजन्ति इत्यर्थ पादपीडाकरेऽप्यतिभारभङ्गुरशरीरतया न शीघ्र गन्तु शक्यते इति भाव ॥ ११ ॥

दिवाकरादिति। य हिमाद्रि दिवा दिवसे भीत भया विष्टम् इव, उलूकम् इवेति च ध्वनि, गुहासु लीनम अन्धकार ध्वान्त, दिवा दिन करोति इति दिवाकर तस्मात् दिवाकरात् 'दिवाविभानिशाप्रभाभास्कर इत्यादिना टप्रत्यय, 'भीत्रार्थाना भयहेतु' इत्यपादानत्वात पञ्चमी। रक्षति त्रायते। ननु क्षुद्रसरक्षणमनर्हमित्याशङ्क्याह, क्षुद्रे इति। उच्चै शिरसाम्

१ संश्लिष्ट लग्नम् इति यावत। आत्मनेपदिदिवादिगणीयलीधातो कर्त्तरि क्त।

क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसां सतीव ॥ १२ ॥
लाङ्गूलविक्षेपविसर्पिशोभै
रितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं
कुर्व्वन्ति बालव्यजनैश्चमर्य्यः[1] ॥ १३ ॥
यत्रांशुकाक्षेपविलज्जितानां
यदृच्छया किम्पुरुषाङ्गनानाम् ।

उन्नतानां शरणं प्रपन्ने शरणागते क्षुद्रे नीचे अपि सति सज्जने इव नूनं ममत्वं मम अयम् इति अभिमानः अस्ति इति शेषः । ममशब्दात् त्वप्रत्ययः । अर्थान्तरन्यासोऽलङ्कारः ॥ १२ ॥

लाङ्गूलेति। चमर्य्यः मृगीविशेषाः इतस्ततः लाङ्गूलानि बालधयः 'पुच्छोऽस्त्री लोमलाङ्गूले बालहस्तश्च बालधिः' इत्यमरः । तेषां विक्षेपैः विधूननैः विसर्पिण्यः विसृमराः शोभाः कान्तयः येषां तैः चन्द्रमरीचिभिः इव गौरैः शुभ्रैः 'गौरः करीषे सिद्धार्थे शुक्ले पीतेऽरुणेऽपि च' इति यादवः । 'उपमानानि सामान्यवचनैः' इति समासः । बालव्यजनैः चामरैः यस्य हिमाद्रेः गिरिराजशब्दं गिरिराजः इति संज्ञाम् अर्थयुक्तम् अभिधेयवन्तं कुर्व्वन्ति, राजानो हि छत्रचामरादिचिह्निना इति भावः ॥ १३ ॥

यत्रेति। यत्र हिमाद्रौ अंशुकाक्षेपेण वस्त्रापहरणेन विलज्जितानां किम्पुरुषाङ्गनानां किन्नरस्त्रीणां यदृच्छया दैवगत्या दरीगृहद्वारेषु विलम्बिबिम्बाः लम्बमानमण्डलाः जलदाः

[1] बालव्यजनैः बालाः एव व्यजनानि तैः ।

दरीगृहद्वारविलम्बिबिम्बा
तिरस्करिण्यो जलदा भवन्ति ॥ १४ ॥
भागीरथीनिर्झरशीकराणा१
वोढा मुहुः कम्पितदेवदारु ।
यद्वायरन्विष्टमृगै २ किरातै
आसेव्यते३ भिन्नशिखण्डिबर्ह.४ ॥ १६ ॥

तिरस्करिण्य जवनिका भवन्ति 'प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा' इत्यमर । 'तिरसोऽन्यतरस्याम्' इति सत्वम् । अत्र जलदेषु आरोप्यमाणस्य तिरस्करिणीत्वस्य प्रकृतोपयोगित्वात् परिणामालङ्कार ॥ १४ ॥

भागीरथीति । भागीरथीनिर्झरशीकराणा गङ्गाप्रवाह पाथ कणाना । कर्म्मणि षष्ठी । वोढा प्रापक । वहेस्तृच् । मुहु पुन पुन सद्यो वा 'पौन पुन्ये भृशार्थे च सद्यो वा स्यान्मुहु-पदम्' इति वैजयन्ती । कम्पिता देवदारव येन स तथोक्त भिन्नानि विश्लेषितानि शिखण्डिना बर्हाणि गरिलाघवार्थ किरातकटिबद्धानि येन स तथोक्त, क्रमात् विशेषणत्रयेण शैत्यसौरभ्यमान्द्यान्युक्तानि । यस्य हिमाद्रे वायु अन्विष्टमृगै मार्गितमृगै आन्तै इति भाव 'अन्विष्ट मार्गित मृगितम इत्यमर । किरातै आसेव्यते ॥ १५ ॥

---

१ भगीरथेन आनीता भागीरथी तस्या निर्झरा तेषा शीकर तेषाम् ।

२ अन्विष्टा, मृगा यै ते अन्विष्टमृगाः तै ।

३ अनुभूयते ।

४ शिखण्ड पिच्छ विद्यते येषां ते शिखण्डिन मयूरा ।

सप्तर्षिहस्तावचितावशेषा-
ण्यधो१ विवस्वान् परिवर्त्तमान ।
पद्मानि यस्याग्रसरोरुहाणि
प्रबोधयत्यूर्द्धमुखैर्मयूखै २ ॥ १६ ॥
यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमञ्च३ ।

सप्तर्षीति। सप्त च ते ऋषयश्च सप्तर्षय 'दिक्सङ्ख्ये सज्ञायाम्' इति समास । तेषा हस्तै अवचितेभ्य लूनेभ्य अवशेषाणि अवशिष्टानि 'शेषोऽप्रधाने सन्तापे लिङ्गवन्यत्नोप युज्यते' इति केशव । कर्म्मणि घञ्प्रत्यय , अनेन पद्माना साफल्य सूचितम यस्य हिमाद्रे रोहन्ति इति रुहाणि 'इगुपधज्ञा प्रीकिर क' इति कप्रत्यय । अग्रे उपरि यानि सरासि तेषु रुहाणि पद्मानि अध परिवर्त्तमान भ्रमन विवस्वान सूर्य्य ऊर्द्धमुखै मयूखै प्रबोधयति विकासयति, न कदाचिदधोमखै अतिमार्त्तण्डमण्डललादग्रभूमे इति भाव । सप्तर्षि मण्डल भवादप्यूर्द्धमिति ज्योतिषिका , अतस्तेषामग्रसरोरुह भागित्व युक्तम ॥ १६ ॥

यज्ञाङ्गेति। यस्य हिमाद्रे यज्ञाङ्गाना यज्ञसाधनाना सोमलतादीना योनि प्रभव तस्य भाव तत्त्वम 'यज्ञाङ्गार्थं

१ सप्तर्षय मरीचि अत्रि अङ्गिरा पुलस्त्य पुलह क्रतु वशिष्ठ श्चेति ।

२ ऊर्द्धमुखै ऊर्द्ध मुख येषा तै ऊर्द्धप्रवर्त्तिभि इत्यर्थ । मयूखै किरणै ।

३ धरित्र्या धरण तस्मिन क्षम तम ।

प्रजापतिः कल्पितयज्ञभागं
शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १७ ॥
स मानसीं मेरुसखः पितॄणां१
कन्यां कुलस्य स्थितये स्थितिज्ञः२।

मया सृष्टो हिमवानचलेश्वरः' इति विष्णुपुराणात्। धरित्री-धरणक्षमं भूभारधरणयोग्यं सारं बलञ्च 'सारो बले स्थिरांशे च' इत्यमरः। अवेक्ष्य ज्ञात्वा प्रजापतिः स्वयमेव कल्पितः यज्ञभागः यस्मिन् तत् तथोक्तम् 'सोमस्य राज्ञः कुलुङ्ग इन्द्रो मृगी समुद्रस्य शिशुमारो हिमवतो हस्ती' इति श्रुतेः इति भावः। शैलानाम् आधिपत्यम् अधिपतित्वम् 'पत्यन्तपुरोहितादिभ्यो यक्' इति यक्प्रत्ययः। अन्वतिष्ठत् ददाति स्म इत्यर्थः। उक्तञ्च ब्रह्माण्डपुराणे, 'शैलानां हिमवन्तञ्च नदीनाञ्चैव सागरम्। गन्धर्वाणामधिपतिं चक्रे चित्ररथं विधिः॥' इति॥१७

सम्प्रति कथां प्रस्तौति स मानसीमिति। मेरोः सखा मेरु-सखः बन्धुसम्पन्न इति भावः, स्थितिज्ञः मर्य्यादाभिज्ञः, अनेन श्रुतसम्पत्तिः सूच्यते, सः हिमवान् पितॄणां मानसीं मनःसङ्कल्प-जन्यां मुनीनाम् अपि माननीयां योगब्रह्मवादाभ्यां पूज्याम् इत्यर्थः। उक्तं च विष्णुपुराणे 'तेभ्यः शुभास्पदं जज्ञे मेनका हरिणी तथा। ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज॥'

१ अग्निष्वात्तादीनाम्। तथाच विष्णुपुराणे, 'पितरो ब्रह्मणा सृष्टा व्याख्याता ये मया तव। अग्निष्वात्ता वर्हिषदोऽनग्नयः साग्नयश्च ये। तेभ्यः स्वधा सुतौ जज्ञे मेना वैधारिणी तथा। ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज॥' इति।

२ स्थितिं जानाति यः स स्थितिज्ञः 'इगुपधज्ञाप्रीकिरः कः' इति सूत्रेण जानातेः कर्त्तरि कः।

मेनां मुनीनामपि माननीयाम्
आत्मानुरूपां विधिनोपयेमे ॥ १८ ॥
कालक्रमेणाथ तयोः प्रवृत्ते
स्वरूपयोग्ये सुरतप्रसङ्गे ।
मनोरमं यौवनमुद्वहन्त्या
गर्भोऽभवद् भूधरराजपत्न्याः ॥ १९ ॥
असूत१ सा नागवधूपभोग्यं
मैनाकमम्भोनिधिबद्धसख्यम्२ ।

इति । आत्मानुरूपां कुलशीलसौन्दर्य्यादिभिः सदृशीं मेनां मेनकादेवी इति नामवतीं कन्यां कुलस्य स्थितये प्रतिष्ठायै विधिना यथाशास्त्रेण उपयेमे परिणीतवान् 'उपाद्यमः स्वकरणे' इति आत्मनेपदम् 'तेषान्तु मानसी कन्या मेना नाम महागिरेः । पत्नी हिमवतो यस्याः पुत्रो मैनाक उच्यते ॥' इति ब्रह्माण्डपुराणात् ॥ १८ ॥

कालक्रमेणेति । अथ कालक्रमेण गच्छता कालेन इत्यर्थः, तयोः मेनकाहिमवतोः स्वरूपयोग्ये सौन्दर्य्यानुगुणे, यद्वा रूप्यते निरूप्यते अनेन इति रूपं ज्ञानं तद्योग्ये शास्त्रानुसारिणि इत्यर्थः, सुरतप्रसङ्गे सुरतकर्म्मणि प्रवृत्ते सति मनोरमं यौवनम् उद्वहन्त्याः भूधरराजपत्न्याः मेनकायाः गर्भः अभवत् ॥ १९ ॥

असूतेति । सा मेना नागवधूपभोग्यं नागकन्यापरिणेतारम् इत्यर्थः, अम्भोनिधिना बद्धसख्यं समुद्रकृतमैत्रीकम्, सख्य-

१ प्रसूतवती ।
२ मैनाकं मेनकाया अपत्यं पुमान् मैनाकः तम् ।

क्रुद्धेऽपि पक्षच्छिदि१ वृत्रशत्रौ
अवेदनाज्ञं कुलिशक्षतानाम्२ ॥ २० ॥
अथावमानेन पितुः प्रयुक्ता
दक्षस्य कन्या भवपूर्व्वपत्नी।

मूलं सूचयति पक्षच्छिदि पक्षच्छेत्तरि 'सत्सूद्विष' इत्यादिना क्विप्प्रत्ययः। वृत्रशत्रौ क्रुद्धे कुपिते सत्यपि कुलिशक्षतानां वज्रप्रहाराणाम्। सम्बन्धसामान्ये षष्ठी। जानाति इति ज्ञः 'इगुपधज्ञा' इति कप्रत्ययः। वेदनानां ज्ञः, अथवा वेदनां जानाति इति वेदनाज्ञः 'आतोऽनुपसर्गे कः' इति कप्रत्ययः। 'उपपदमतिङ्' इति समासः। स न भवति इति अवेदनाज्ञः न कुलिशक्षतवेदनानभिज्ञम् इत्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। पक्षच्छेदोद्यतशक्रात् त्राणाय शरणागमनमनयोः सख्यमूलम् इति भावः। मैनाकः पुत्रम् असूत। सर्व्वपर्व्वतपक्षच्छेदेऽप्ययमच्छिन्नपक्ष एव इति मैनाकस्य उत्कर्षः, तादृक्पुत्रवत्त्वं हिमाद्रेरिति सार्थकं मैनाकस्य वर्णनम्। 'पिता न ज्ञायते यस्या भ्राता यदि न विद्यते। नोपयच्छेत तु तां कन्यां धर्म्मलोपभयात् सुधीः॥' इति अभ्रातृककन्यापरिणयनिषेधात् प्रकृते पार्व्वती भ्रातृमती एवेति सूचनार्थं मैनाकवर्णनमिति तात्पर्य्यार्थः॥ २०॥

अथेति। अथ मैनाकजननानन्तरं दक्षस्य प्रजापतेः कन्या भवस्य महादेवस्य पूर्व्वपत्नी पूर्व्वभार्य्या सती पतिव्रता 'सती साध्वी पतिव्रता' इत्यमरः। सती नाम देवी पितुः दक्षस्य। कर्त्तरि षष्ठी। अवमानेन स्वभर्तृवज्ञया प्रयुक्ता प्रेरिता योगेन

१ पक्षान् छिनत्ति यः स पक्षच्छित् तस्मिन्। कर्त्तरि क्विप्।

२ क्षणु हिंसायां इति तनादिगणीयक्षणधातोः भावे क्तः।

सती सती योगविसृष्टदेहा१
ता जन्मने शैलवधू प्रपेदे२ ॥ २१ ॥
सा भूधराणामधिपेन३ तस्यां
समाधिमत्यामुदपादि४ भव्या५ ।
सम्यक्प्रयोगादपरिक्षताया
नीताविवोत्साहगुणेन सम्पत् ॥ २२ ॥

योगमार्गेण विसृष्टदेहा त्यक्तदेहा सती जन्मने पुनरुद्भवाय ता शैलवधू मेनका प्रपेदे। अत्र पुरा किल सती देवी दक्षाध्वरे तत्कृता स्वभर्त्तृवज्ञामसहमाना पितर प्रसह्य उपेक्ष्य मत्कर्त्तव्यकार्य्यं त्वज्जामातैव करिष्यतीति निर्द्धार्य्य देवकार्य्याणि साधयितुञ्च योगाग्निना स्वशरीर ददाह इति पुरावृत्तकथा अनुसन्धेया ॥ २१ ॥

सेति। भव्या कल्याणी सा सती भूधराणाम् अधिपेन हिमवता समाधिमत्या नियमवत्या तस्या मेनकाया सम्यक्प्रयोगात् साध्वाचरणात् हेतो, अपरिक्षतायाम् अभ्रष्टाया नीतौ उत्साहगुणेन उत्साहशक्त्या कर्त्त्री सम्पत् इव, उदपादि उत्पादिता। उत्पद्यतेर्ण्यन्तात् कर्म्मणि लुङ् 'चिण् भावकर्म्मणो' इति चिण्प्रत्यय, 'चिणो लुक्' इति तस्य लुक् ॥ २२ ॥

१ योगेन विसृष्ट देह यया इति बहुव्रीहि । विसृष्टेति विपूर्व्वात् सृजधातो कर्म्मणि क्त ।

२ प्राप । प्रपूर्व्वात पद्धातो अतीते लिट् ।

३ अधिपाति रक्षति य स अधिप । अधिपूर्व्वात् पाधातो कर्त्तरि क ।

४ समाधिमत्या समाधि विद्यते यस्या सा तस्याम ।

५ भव कल्याणम् अर्हति या सा ।

प्रसन्नदिक् पांशुविविक्तवातं१
शङ्खस्वनानन्तरपुष्पवृष्टि।
शरीरिणां स्थावरजङ्गमानां
सुखाय तज्जन्मदिनं बभूव२ ॥ २३ ॥
तया दुहित्रा सुतरां३ सवित्री
स्फुरत्प्रभामण्डलया४ चकाशे।

प्रसन्नेति। प्रसन्ना निर्मला दिशः यस्मिन् तत् प्रसन्नदिक् पांशुर्विविक्ता रजोरहिता वाता यस्मिन् तत् तथोक्तं शङ्खस्य स्वनात् स्वनस्य वा अनन्तरं पुष्पवृष्टिः यस्मिन् तत् तथोक्तं तस्याः पार्वत्याः जन्मदिनं स्थितिशीलाः स्थावराः शैलवृक्षादयः 'स्थेशभासपिसकसो वरच्' इति वरच्प्रत्ययः। जङ्गम्यन्ते भृशं गच्छन्ति इति जङ्गमाः देवतिर्यङ्मनुष्यादयः स्थावराश्च जङ्गमाश्च तेषां द्वयानामपि शरीरिणां सुखाय आनन्दाय बभूव ॥ २३ ॥

तयेति। स्फुरत्प्रभामण्डलया तया दुहित्रा सवित्री जनयित्री 'स्वरतिसूयतिसूतिधूञूदितो वा' इति इडागमः। विदूरस्य अद्रेः प्रान्तभूमिः विदूरभूमिः 'अविदूरे विदूरस्य गिरेरुत्तुङ्गरोधसः। काकतालीयसीमान्ते मणीनामाकरो भवेत्॥' इति वृद्धः। नवमेघशब्दात् उद्भिन्नया रत्नशलाकया रत्नाङ्कुरेण इव, सुतरां चकाशे रराज ॥ २४ ॥

१ विविक्ताः। विपूर्वात् विचिर्धातोः कर्मणि क्तः। विचधातोरत्र पृथक्करणम्।

२ जातम्।

३ अतिशयेन।

४ स्फुरत् दीप्यमानं प्रभामण्डलं कान्तिमण्डलं यस्याः सा तया।

विदूरभूमिर्नवमेघशब्दात्
उद्भिन्नया१ रत्नशलाकयेव ॥ २४ ॥
दिने दिने सा परिवर्द्धमाना
लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान्२ विशेषान्
ज्योत्स्नान्तराणीव कलान्तराणि ॥ २५ ॥

दिने दिन इति । लब्ध उदय यया सा लब्धोदया उत्पन्ना इत्यर्थ अभ्युदिता इत्यन्यत्र, दिने दिने प्रतिदिनम 'नित्य वीप्सयो इति वीप्साया द्विरुक्ति । परिवर्द्धमाना, उभयत्र समानमेतत् सा बाला चन्द्रमस इय चान्द्रमसी लेखा इव, लावण्यमयान कान्तिविशेषप्रचुरान 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥ इति भूपाल । विशेषान् अवयवान् 'विशेषोऽवयवे व्यक्तौ इति उत्पलमालायाम । ज्योत्स्नायाम् अन्तरम् अन्तर्द्धान येषा तानि ज्योत्स्नान्तराणि ज्योत्स्नया अन्तर्हितानि तन्मयानि इति यावत अन्या कला कलान्तराणि इव) सुपसुपेति समास । 'स्थानात्म्यान्यतादर्थ्यरन्ध्रान्तर्धिषु चान्तरम् इति शाश्वत । पुपोष उपचितवती । इय वाक्योपमा इत्याह दण्डी । तल्लक्षण तु, वाक्यार्थेनैव वाक्यार्थ कोऽपि यद्युपमीयते । एकानेकेवशब्दत्वात सा तु वाक्योपमा द्विधा ।' ॥ २५ ॥

१ नव नूतन मेघ तस्य शब्द गर्ज्जन तस्मात । उद्भिन्नया उद्गतया ।

२ प्राचुर्य्येण लावण्य प्रकृतमेषाम् इति लावण्यमयाः तान ।

तां पार्व्वतीत्याभिजनेन नाम्ना
बन्धुप्रिया१ बन्धुजनो जुहाव ।
उ मेति मात्रा तपसो निषिद्धा
पश्चादुमाख्या सुमुखी जगाम ॥ २६ ॥
महीभृतः २ पुत्रवतोऽपि दृष्टि
स्तस्मिन्नपत्ये न जगाम तृप्तिम् ।

तामिति । बन्धुप्रिया तां बालां बन्धुजनः पित्रादिः, अभिजनात् आगतेन आभिजनेन पित्रादिपूर्व्वसम्बन्धोपाधिकेन इत्यर्थः 'अभिजनाः पूर्व्वबान्धवाः' इति काशिका। नाम्ना, पर्व्वतस्य अपत्यं स्त्री पार्व्वती 'तस्यापत्यम्' इति अण्प्रत्ययः । इति जुहाव आहूतवान् । ह्वयतेर्लिटि रूपम् । पर्व्वतजन्यत्वोपाधिना पार्व्वती इति नाम्ना प्रसिद्धिः इति भावः । पश्चात् आभिजननामप्रवृत्त्यनन्तरं मात्रा जनन्या उ इति सम्बोधने 'उ इति वितर्के सम्बोधनपादपूरणेषु' इति गणव्याख्याने । माशब्दः निषेधे उ हे वत्से मा मा कुरु इत्येवंरूपेण तपसः तपश्चर्य्यायाः 'वारणार्थानामीप्सितः' इति अपादानत्वात् पञ्चमी । निषिद्धा निवारिता सती सुमुखी सा बाला उमा इति आख्यां नामधेयम् उमाख्यां जगाम ॥ २६ ॥

महीभृत इति । (पुत्राश्च दुहितरश्च पुत्राः 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इत्येकशेषः)। ते अस्य सन्ति इति पुत्रवान्। भूमार्थे मतुप् । तस्य पुत्रवतोऽपि बह्वपत्यस्यापि) इत्यर्थः, मही

---

१ प्रीणाति या सा प्रिया । प्रीधातोः कर्त्तरि कः ।(बन्धूनां प्रिया प्रीतिदा यनी ताम्)

२ महीं पृथिवीं बिभर्त्ति धारयति यः स महीभृत् पर्व्वतः । अत्र हिमालयपर्व्वतैः पृथिवी धार्य्यते इति पौराणिकानां मतम् ।

अनन्तपुष्पस्य१ मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा ॥ २७ ॥
प्रभामहत्या२ शिखयेव दीप
स्त्रिमार्गयेव३ त्रिदिवस्य मार्ग ।
संस्कारवत्येव गिरा मनीषी
तया स पूतश्च विभूषितश्च ॥ २८ ॥

भूत हिमाद्रे दृष्टि चक्षु तस्मिन् अपत्ये तोके 'अपत्य तोक तयो समे' इत्यमर । तस्या पार्व्वत्याम् इत्यर्थ तृप्ति न जगाम। तथाहि, अनन्तपष्पस्य नानाविधकुसुमस्यापि मधो वसन्तस्य सम्बन्धिनी द्विरेफमाला भृङ्गपङ्क्ति चूतस्य विकारे चूते चूतकुसुमे 'अवयवे च प्राण्योषधिवृक्षेभ्य' इति विकारा र्थोत्पन्नस्य अण्प्रत्ययस्य लुप्प्रकरणे पुष्पमूलेषु बहुलम् इति पठनात् लुक्। सविशेष सातिशय सङ्ग यस्या सा तथोक्ता अत्यन्तासक्ता इत्यर्थ ॥ २७ ॥

प्रभेति। प्रभामहत्या प्रकाशाधिकया शिखया ज्वालया दीप इव, शिखादीपयोरवयवावयविभावाद् भेदेन व्यपदेश । त्रय मार्गा यस्या तया त्रिमार्गया मन्दाकिन्या३। तृतीया। द्यौर्लोक इति त्रिदिव स्वर्ग, वृत्तिविषये त्रिशब्दस्य त्रिभागवत पूरणार्थत्वम् पृषोदरादित्वात् दिवशब्दात् अकारागम, पुस्त्व लोकात् दीव्यतेर्घञर्थे कविधान दीव्यन्त्यत्र जना इति दिव

१ नास्ति अन्त येषा तानि तथोक्तानि पुष्पाणि यस्मिन स तस्य।

२ प्रभया महती तया।

३ त्रिभागया त्रय मार्गा पन्थान स्रोतांसि इति यावत् (स्वर्ग मर्त्य लोके पाताले चेति शेष) यस्या सा तया। स्वर्गे मन्दाकिनी पृथिव्या भागीरथी रसातले भोगवती इति कथ्यते। अत मन्दाकिन्या।

मन्दाकिनीसैकतवेदिकाभि
सा कन्दुके कृत्रिमपुत्रकैश्च ।
रेमे१ मुहुर्मध्यगता सखीना
क्रीडारसं निर्विशतीव बाल्ये ॥ २९ ॥

ता हंसमाला: शरदीव गङ्गा
महौषधि नक्तमिवात्मभास. ।

इति चोरस्वामी। तस्य मार्ग इव, संस्कार व्याकरणजन्या शुद्धि तद्वत्या गिरा वाचा 'भद्रैषा लक्ष्मीर्निहिताधिवाचि इति श्रुते इति भाव । (मनस ईषा मनीषा सा अस्य अस्ति इति मनीषी विद्वान् इव,) पृषोदरादित्वात् साधु । तया पार्वत्या स हिम वान पूत शोधितश्च विभूषितश्च। अत्र शिखागिरोरविशिष्टयो रुपमानानर्हत्वात् न विशेषणाधिक्यदोष । इय मालोपमा ॥२८॥

मन्दाकिनीति । सा पार्वती बाल्ये वयसि (क्रीडाना रस स्वाद रुचि इति यावत त क्रीडारसम् 'रसो गन्धे रस स्वादे इति विश्व । निर्विशति इव भुञ्जाना इव निर्वेशो भृति भोगयो इति विश्व । 'आच्छीनद्योर्नुम इति विकल्पात् नुम-भाव । सखीना मध्यगता सती मन्दाकिन्या सैकतेषु पुलिनेषु वेदिकाभि ) कन्दुके क्रियया निर्वृत्ते कृत्रिमे ड्वित क्त्रि इति क्त्रिप्रत्यय, 'क्त्रेमम्नित्यम् इति मवागमश्च । पुत्रके पाञ्चालि काभि 'पाञ्चालिका पुत्रिका स्यात वस्त्रदन्तादिभि कृता इत्यमर । संज्ञाया कन् इति कनप्रत्यय । मुहु पुन पुन रेमे ॥ २९ ॥

तामिति । (स्थिर स्थेयान् उपदेश प्रागुभवोध यस्या तादृशी मेधाविनीम् इत्यर्थ) ता पार्वतीम् उपदेशकाले प्राक्तन

1 क्रीडितवती ।

स्थिरोपदेशामुपदेशकाले
  प्रपेदिरे१ प्राक्तनजन्मविद्या २ ॥ ३० ॥

असम्भृतं मण्डनमङ्गयष्टेः ३
  अनासवाख्यं४ करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं५
  बाल्यात् परं साथ वयः प्रपेदे ॥ ३१ ॥

जन्मविद्या पूर्व्वजन्माभ्यस्तविद्या इत्यर्थः, शरदि गङ्गां हंस माला इव, नक्तं रात्रौ महौषधिं तृणविशेषम् आत्मभास स्वदीप्तय इव, प्रपेदिरे। उपमानसामर्थ्यादुपदेशमन्तरेण वेति गम्यते ॥ ३० ॥

असम्भृतमिति। अथ सा पार्व्वती अङ्गयष्टेः असम्भृतम् अयत्नसिद्धं मण्डनं प्रसाधनम् अनासवाख्यम् आसवाख्यारहितं मदस्य करणं साधनं कामस्य पुष्पात् व्यतिरिक्तम् अस्त्रम् अस्त्र भूतं बाल्यात् शैशवात् परम् अनन्तरभावि वयः यौवनं प्रपेदे प्राप। यौवनेनैव हि युवतयः प्रसाध्यन्ते काम्यन्ते च इति भावः। अत्र द्वितीयपादे आसवरूपकारणाभावेऽपि तत्कार्य्यमदोक्तेः विभावनालङ्कारः। तदुक्तम्, ‘कारणाभावे कार्य्योत्पत्तिर्विभावना इति, प्रथमतृतीययोस्तु आरोप्यमानयोर्मण्डनमदास्त्रयोः प्रकृतोपयोगात् परिणामालङ्कारः, तल्लक्षणन्तु उक्तम् ॥ ३१ ॥

---

१ प्राप ।

२ (प्राक् पूर्व्वं भवं प्राक्तनं ततं जन्म ~~प्राक्तनम्~~ तस्य ~~वा~~ विद्या )।

३ (अङ्गं यष्टिरिव इत्युपमितिसमासः)।

४ अनासवाख्यं (नास्ति आसव इति आख्या यस्य ततं )

५ पुष्पव्यतिरिक्तं कुसुमेतरत्।

उन्मीलितं तूलिकयेव चित्र
सूर्य्यांशुभिर्भिन्नमिवारविन्दम्।
बभूव तस्याश्चतुरस्रशोभि
वपुर्विभक्तं नवयौवनेन॥ ३२॥
अभ्युन्नताङ्गुष्ठनखप्रभाभि.
निक्षेपणाद्रागमिवोद्गिरन्तौ।

उन्मीलितमिति। नवयौवनेन प्रथमयौवनेन विभक्तम् अभिव्यञ्जितपीनजघनादिसस्थानम् इत्यर्थ, तस्या पार्व्वत्या वपु तूलिकया कूर्चिकया शलाकया इत्यर्थ 'तूलिका कथिता लेख्यकूर्चिका तूलशय्ययो' इति विश्व। उन्मीलित रञ्जनद्रव्येण उद्भासितम् समुत्कीर्णरूपम् इति यावत् चित्रम् आलेख्यम् इव, सूर्य्यांशुभि भिन्न विकसितम् अरविन्द पद्मम् इव, चतस्र अस्रय यस्य तत चतुरस्रम् अन्यूनातिरिक्त यथा तथा शोभते इति चतुरस्रशोभि। ताच्छील्ये णिनि। बभूव, चित्रारविन्दयो तूलिकातरणिकिरणसम्बन्ध इव तत विग्रहस्यैव अङ्गसौष्ठवस्य यौवनप्रादुर्भावोऽभिव्यञ्जको बभूव इत्यर्थ॥ ३२॥

देवताना रूप पादाङ्गुष्ठप्रभृति वर्ण्यते मानुषाणा केशादारभ्येति धार्म्मिका। सम्प्रति सप्तदशभि श्लोकै पार्व्वत्या पादादिकेशान्तवर्णनमारभते, अभ्युन्नतेति। अभ्युन्नतयोः अङ्गुष्ठनखयो प्रभाभि निमित्तेन निक्षेपणात् निर्भरन्यासात् हेतो रागम् अन्तर्गत लौहित्यम् 'राग क्लेशादिके रक्ते मात्सर्य्ये लोहितादिषु' इति शाश्वत। उद्गिरन्तौ वमन्तौ बहिर्निःसारयन्ताविव स्थितौ इत्यर्थ। अत्र उद्गिरतेर्गौणार्थत्वात न ग्राम्यतादोष प्रत्युत गुण एव। यथाह दण्डी निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्। अतिसुन्दरमन्यत्र ग्राम्यकक्षा

आजह्रतुस्तच्चरणौ[१] पृथिव्यां
स्थलारविन्दश्रियमव्यवस्थाम्[२] ॥ ३३ ॥
सा राजहंसैरिव सन्नताङ्गी
गतेषु लीलाञ्चितविक्रमेषु ।

त्रिगाहते॥' इति। तस्याः चरणौ तच्चरणौ पृथिव्याम् अव्यवस्थां व्यवस्थारहितां सञ्चारिणीम् इत्यर्थः, स्थलारविन्दश्रियम् आजह्रतुः। स्थलविशेषणात् नियतलौहित्यलाभः। अत्र सामुद्रिकाः 'यस्या रक्ततलौ पादौ उन्नताग्रौ तलस्पृशौ। निगूढ-गुल्फौ निहतौ सा स्यान्नृपतिसम्मता॥' इति। अत्र उपमानधर्मस्यारविन्दश्रियश्चरणयोरुपमेययोरसम्भवादरविन्द श्रियमिव श्रियमिति प्रतिबिम्बीकरणाक्षेपान्निदर्शनालङ्कारः सा च सम्बन्धे असम्बन्धलक्षणातिशयोक्त्युत्थापिता। अव्यवस्था मित्यनेन स्थलारविन्दस्य स्थैर्यसम्बन्धेऽप्यसम्बन्धाभिधानात्। निदर्शनालक्षणं तु, 'असम्भवद्धर्मयोगात् उपमानोप मेययोः। प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना॥' इति ॥ ३३ ॥

सेति। प्रत्युपदेशलुब्धैः 'गुरुशुश्रूषया विद्या-पुष्कलेन धनेन वा। अथवा विद्यया विद्या चतुर्थी नोपपद्यते॥' इति न्यायात् इति भावः। तदेव व्यनक्ति, नूपुरसिञ्जितानि आदित्सुभिः आदातुमिच्छुभिः मञ्जीरशिञ्जितमञ्जुकूजितोपदेशमिच्छद्भिः इत्यर्थः, राजहंसैः सन्नताङ्गी कुचभारात् इति भावः, सा पार्वती लीलाभिः विलासैः अञ्चिताः पूजिताः विक्रमाः पादन्यासाः येषु तेषु। 'अञ्चु पूजायाम्' इति इडागमः। 'लीला विलास-

१ आजह्रतुः सञ्जह्रतुः अनुचक्रतुरिति यावत्।
२ अव्यवस्था नास्ति व्यवस्था स्थितिः यस्याः सा ताम्।

व्यनीयत[1] प्रत्युपदेशलुब्धै[2]
आदित्सुभिर्नूपुरशिञ्जितानि[3] ॥ ३४ ॥
वृत्तानुपूर्ब्वे च न चातिदीर्घे
जङ्घे शुभे सृष्टवतस्तदीये।
शेषाङ्गनिर्माणविधौ विधातु.
लावण्य उत्पाद्य इवास यत्नः ॥ ३५ ॥

क्रिययो' इत्यमर। गतेषु विषये व्यनीयत इव, विनीता किमु, अन्यथा कथमस्या हंसगमनमित्युत्प्रेक्षा ॥ ३४ ॥

वृत्तेति। वृत्ते वर्तुले पूर्ब्बमनुगते अनपूर्ब्बे, गोपुच्छाकारे इत्यर्थ, वृत्ते च ते अनुपूर्ब्बे च वृत्तानपूर्ब्बे नातिदीर्घे च। महाविभाषया न समास, नञो विशेषणत्वञ्च प्रयोगादेव ज्ञेयम्। शुभे मङ्गले तस्या इमे तदीये जङ्घे प्रसृते जङ्घा तु प्रसृता' इत्यमर। सृष्टवत निर्मितवत स्रष्टु शेषाङ्गनिर्माण विधौ जङ्घाव्यतिरिक्तावयवनिर्माणार्थम् इत्यर्थ, उत्पाद्ये पुन-सम्पाद्ये लावण्ये कान्तिविशेषे विषये। लावण्यलक्षण तु उक्तम् यत्न आस इव,बभूव इव इत्युत्प्रेक्षा,उपादानमन्तरेण कार्य्यस्य दुष्करत्वात् तदज्ञानाञ्च लावण्योपादानकत्वात् पूर्ब्बसम्पादितस्य च जङ्घार्थमेव कार्त्स्न्येन विनियोगात् पुनर्लावण्यसम्पादने यत्न स्यादेवेत्येतादृक्सौन्दर्य्ये तज्जङ्घे इति भाव। आसेति बभूवार्थे तिङन्तप्रतिरूपकमव्ययमित्याह शाकटायन, वल्लभस्तु न

---

१ विपूर्ब्बात नीधातो अतीते कर्म्मणि लङ।

२ प्रत्युपदेशे लुब्धा तै प्रतिशिक्षालोलुपै।

३ आदित्सुभि आङपूर्ब्बात दाधातो सन, तत उ, तत तृतीया बहुवचनम। शिञ्जितानि रणितानि शब्दितानि इति यावत। शिञ्जधातो भावे क्त।

नागेन्द्रहस्तास्त्वचि कर्कशत्वात्
एकान्तशैत्यात् कदलीविशेषा.।
लब्ध्वापि लोके परिणाहि रूपं
जातास्तदूर्व्वोरुपमानवाह्या ॥ २६ ॥
एतावता नन्वनुमेयशोभि
काञ्चीगुणस्थानमनिन्दिताया ।

तिङन्तप्रतिरूपकमव्ययम् 'असेर्भू' इति आदेशनियमात ताहक्तिङन्तस्यैवाभावात्,किन्तु कवीनामय प्रामादिक प्रयोग इत्याह, वामनस्तु अस गतिदीप्त्यादानेष्विति धातोर्लिटि रूपमिदमित्याह, असेत्यनुदात्तेत् दीप्त्यर्थे आस दिदीपे प्रवृत्त इत्यर्थ ॥ २५ ॥

नागेन्द्रेति। नागेन्द्राणाम् ऐरावतादीनां हस्ता करा त्वचि चर्म्मणि कर्कशत्वात्, कदलीविशेषा रामरम्भादय एकान्तशैत्यात् नियतशैत्यात् हेतो लोके परिणाहि वैपुल्ययुक्तम् 'परिणाहो विशालता' इत्यमर'। रूप लब्ध्वा अपि, अपिशब्दात् करिकदलीमात्रस्य ताहक् परिणाहो नास्ति इति भाव, तस्या ऊर्व्वो तदूर्व्वो उपमानवाह्या जाता उपमानक्रियानर्हा बभूवु, तदूर्व्वोर्न कार्कश्य नापि एकान्त शैत्यम् इति भाव ॥ २६ ॥

एतावतेति। अनिन्दिताया अनवद्याया पार्व्वत्या काञ्चीगुणस्थान नितम्बविम्बम् एतावता ननु एतावतैव 'प्रश्नाव धारणानुज्ञाविनयामन्त्रणे ननु, इत्यमर।शोभते इति शोभि। [आवश्यके णिनि, ततस्तुमत्यय:]। अनुमेयम् शोभित्व शोभा यस्य तत् अनुमेयशोभि) त्वप्रत्ययस्तु गतार्थत्वान्न प्रयुक्त इत्याह वामन। पश्चात् आदौ न स्पृष्टोऽपि

आरोपित यद्गिरिशेन पश्चात्
अनन्यनारीकमनीयमङ्कम् ॥ ३७ ॥
तस्याः प्रविष्टा नतनाभिरन्ध्रं
रराज तन्वी नवलोमराजिः ।
नीवीमतिक्रम्य सितेतरस्य
तन्मेखलामध्यमणेरिवार्च्चिः ॥ ३८ ॥

पश्चात तपश्चर्य्यानन्तरम इत्यर्थः । (गिरौ शेते इति गिरिशः शिवः) 'गिरौ डश्छन्दसि' इति डप्रत्ययः, भाषायामपि क्वचिदिष्यते अथवा (गिरिः कैलासः अस्य अस्ति गिरिशः) लोमादित्वात् शप्रत्ययः । तेन गिरिशेन, (अन्यासां नारीणां कमनीयः, कामयितुं शक्यः न भवति इति अनन्यनारीकमनीयः तम्) अङ्कः निजोत्सङ्गम् आरोपितम् अधिरोपितम् इति यत् एतावता लिङ्गेन इति पूर्व्वेणान्वयः । रोहतेर्ण्यन्तात् कर्म्मणि क्तः, 'रुहः पोऽन्यतरस्याम्' इति हकारस्य पकारः, गत्यर्थविवक्षाया द्विकर्म्मकत्वम, प्रधाने कर्म्मणि क्तः । गिरिजानितम्बबिम्बं विश्वातिशायिसौन्दर्य्यं गिरिशाङ्काऽऽरूढत्वात् व्यतिरेकेण नार्य्यन्तरनितम्बबिम्बवत । विपक्षे हेत्वनुक्तिरेव बाधिका । दाक्षायणीनितम्बबिम्बस्य तु पक्षसपक्षयोरन्यतरभावानतिवृत्तेर्निष्कलङ्कमनुमानमित्यलमस्थानसरम्भेण ॥ ३७ ॥

तस्या इति । नीवीं वस्त्रग्रन्थिम् 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः । अतिक्रम्य अतीत्य (नतं निम्नं नाभिरन्ध्रं) प्रविष्टा प्रविशन्ती तन्वी सूक्ष्मा तस्याः पार्व्वत्या नवरोमराजिः सितेतरस्य असितस्य इन्द्रनीलस्य इत्यर्थः, (तस्याः पार्व्वत्या मेखला तन्मेखला)। तस्या इत्यनुवृत्तौ पुनस्तच्छब्दोपादान वाक्यान्तरत्वात् सोढव्यम्, यद्वा तस्याः नीव्या मेखला

मध्येन सा वेदिविलग्नमध्या१
बलित्रयं चारु बभार२ बाला।
आरोहणार्थं नवयौवनेन
कामस्य सोपानमिव प्रयुक्तम्॥ ३९॥ ×
अन्योन्यमुत्पीडयदुत्पलाक्ष्या
स्तनद्वयं पाण्डु तथा प्रवृद्धम्।
मध्ये यथा श्याममुखस्य तस्य
मृणालसूत्रान्तरमप्यलभ्यम्॥ ४०॥

तन्मेखला तत्र तदवस्थानात् तस्या मध्यमणेः अर्चिः प्रभा इव रराज 'ज्वालाभासोर्नपुंस्यर्चिः' इत्यमरः॥ ३८॥

मध्येनेति। 'वेदिः परिष्कृता भूमिः' इत्यमरः। वेदिविलग्नमध्या वेदिवत् कृशमध्या तनुमध्या इति यावत्। सा बाला पार्वती मध्येन मध्यभागेन चारु सुन्दरं बलित्रयं कामस्य आरोहणार्थं नवयौवनेन प्रयुक्तं रचितं सोपानम् इव बभार इत्युत्प्रेक्षा॥ ३९॥

अन्योन्यमिति। अन्योन्यं परस्परम् 'कर्म्मव्यतिहारे सर्व्वनाम्नो द्वे वाच्ये' इति द्विरुक्तिः समासवच्च बहुलमिति बहुलवचनादसमासपक्षेऽपि पूर्व्वपदस्थस्य सुपः सुर्व्वक्तव्य इति तत्रत्यवार्त्तिकम्। उत्पीडयत् उपरुन्धत् पाण्डु गौरम् उत्पलाक्ष्या स्तनद्वयं तथा तेन प्रकारेण प्रवृद्धम्। कर्त्तरि क्तः। श्याममुखस्य कृष्णचूचुकस्य इति स्वरूपवर्णनं तस्य स्तनद्वयस्य मध्ये यथा येन प्रकारेण मृणालसूत्रान्तरं बिसतन्तुमात्रावकाशोऽपि अलभ्यं लब्धुमशक्यम् 'अन्तरमवकाशावधिपरिधाना-

१ वेद्यां विलग्नं मध्यं तद्दिव मध्यं यस्याः सा।

२ धृतवती।

शिरीषपुष्पाधिकसौकुमार्य्यौ
बाहू तदीयाविति मे वितर्क १।
पराजितेनापि कृतौ हरस्य
यौ कण्ठपाशौ मकरध्वजेन२ ॥ ४१ ॥
कण्ठस्य तस्या स्तनबन्धुरस्य
मुक्ताकलापस्य च निस्तलस्य।

न्तर्धिभेदतादर्थ्ये' इत्यमर। अत्र सम्बन्धेऽसम्बन्धरूपाति-शयोक्त्यलङ्कार। कुचयो पीवरत्वातिशयार्थमवकाशसम्बन्धेऽप्य सम्बन्धाभिधानात इति ॥ ४० ॥

लोके सुकुमारत्वमेव कुसुमास्त्रस्य साधकत्वमिति स्थिते मत्याह, शिरीषेति। तस्या इमौ तदीयौ बाहू शिरीषपुष्पात् अधिक सौकुमार्य्यं मार्दव ययो, तथोक्तौ इति मे वितर्क ऊह। कुत? यौ बाहू पराजितेन अपि पूर्व्वं निर्जितेन अपि मकरध्वजेन कामेन हरस्य कण्ठपाशौ कण्ठबन्धनरज्जू कृतौ कण्ठालिङ्गन प्रापितौ इत्यर्थं। तदसाध्यसाधनात् तत आधिक्यम इति भाव। अत्र बाह्वोरारोपितकण्ठपाशत्वस्य प्रकृतवैर निर्यातनोपयोगात् परिणामालङ्कार ॥ ४१ ॥

कण्ठस्येति। स्तनाभ्या बन्धुरस्य उन्नतस्य, तस्या पार्व्वत्या कण्ठस्य गलस्य निस्तलस्य वर्त्तुलस्य मुक्ताकलापस्य मुक्ताभूषणस्य च 'वर्त्तुल निस्तल वृत्त बन्धुरन्तून्नतानतम्' इति 'कलापो भूषणे बर्हे तूणीरे सहतावपि' इति च अमर। अन्योन्यशोभा जननात् भूषणभूष्यभाव अलङ्कारालङ्कार्य्यभाव साधारण समान बभूव उभावप्यन्योन्यस्य भूष्यौ भूषणौ च तभूवतु

१ इत्यहू तकयामि इत्यथ।

२ मकर तन्नामक जलजन्तुविशेष स ध्वज चिह्न यस्य सा तेन।

अन्योन्यशोभाजननाद् बभूव
साधारणो भूषणभूष्यभावः ॥ ४२ ॥
चन्द्रं गता पद्मगुणान् न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला
द्विसंश्रया प्रीतिमवाप लक्ष्मीः ॥ ४३ ॥
पुष्पं प्रवालोपहितं यदि स्यात्
मुक्ताफलं वा स्फुटविद्रुमस्थम् ।

इत्यर्थः । अत्र कण्ठमुक्ताकलापयोः शोभाक्रियाद्वारेण अन्योन्य-भूषाजनकत्वादन्योन्यालङ्कारः । तदुक्तम्, 'परस्परं क्रियाजननमन्योन्यम्' इति ॥ ४२ ॥

इदानीं पार्वतीवदनं चन्द्रकमलसदृशमित्येतदेव वक्रो-भङ्ग्याह, चन्द्रमिति । लोला चपला परिभ्रमणशीला इत्यर्थः । लक्ष्मीः कान्त्यभिमानिनी देवता चन्द्रं गता प्राप्ता सती पद्मगुणान् सौगन्ध्यादीन् न भुङ्क्ते न अनुभवति पद्माश्रिता सती चन्द्रमस इमां चान्द्रमसीम् अभिख्यां शोभाम् 'अभिख्या नामशोभयोः' इत्यमरः । अमृतवदानन्दिनीं न भुङ्क्ते उमामुखं प्रतिपद्य तु द्वे चन्द्रपद्मे संश्रयः कारणं यस्याः ता द्विसंश्रया प्रीतिम् आनन्दम् अवाप तत्रोभयगुणसम्भवात् इति भावः । अत्र उपमानभूतचन्द्रपद्मापेक्षया उपमेयस्योमामुखस्याधिकगुणवत्त्वोक्त्या व्यतिरेकालङ्कारः । तदुक्तम्, 'भेदप्राधान्येनोपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः' इति ॥ ४३ ॥

पुष्पमिति । पुष्पं पुण्डरीकादिकं प्रवाले बालपल्लवे उपहितं निहितं स्यात् यदि 'प्रवालो वल्लकीदण्डे विद्रुमे बाल-पल्लवे' इति विश्वः । मुक्ताफलं वा स्फुटे निर्मले विद्रुमे तिष्ठ

ततोऽनुकुर्य्याद्विशदस्य तस्या
ताम्रौष्ठपर्य्यस्तरुच स्मितस्य१॥ ४४॥
स्वरेण तस्याममृतस्रुतेव२
प्रजल्पितायामभिजातवाचि।

तीति स्फुटविद्रुमस्य स्यात् यदि तत् तर्हि विशदस्य शुभ्रस्य ताम्रे अरुणे ओष्ठे पर्य्यस्ता प्रसृता रुक् कान्ति यस्य तथोक्तस्य तस्या पार्व्वत्या स्मितस्य अनुकुर्य्यात् स्मितमनुकुर्य्यात् इत्यर्थ । अत्र माषाणामश्नीयादितिवत सम्बन्धमात्रविवक्षया षष्ठी । अत्र पुष्पप्रवालयोर्मुक्ताविद्रुमयोश्च असम्बन्धेऽपि सम्बन्धोक्त्या अतिशयोक्ति सा च सम्भावना इत्यलङ्कारसर्व्वस्वकार । विशेषतस्तु पुष्पमुक्ताफलयोरुपमानयो प्रकृतोत्कर्षार्थमुपमेयताकल्पनात् प्रतीपालङ्कार । तदुक्तम्, ‘उपमानस्याक्षेप उपमेयताकल्पन वा प्रतीप’ इति लक्षणात्। स च पूर्व्वोक्तातिशयोक्त्यनुप्राणित इति ॥ ४४॥

स्वरेणेति। अभिजातवाचि मधुरभाषिण्या तस्या पार्व्वत्याम् अमृतस्रुता अमृतस्राविणा इव क्विप्। स्वरेण ... प्रजल्पितायाम् आलपन्त्याम्। कर्त्तरि क्त। (अन्य क्काकादिभि पुष्टा अन्यपुष्टा कोकिला अपि। मख्यया वृत्त्या जातिवचनत्वाभावात् ङीबभाव । ताड्यमाना वाद्यमाना विषमवद्धा तन्त्री वितन्त्री) इव ‘अवितृस्तृतन्त्रिभ्य ई’ इति तन्त्रिधातोरौणादिक ईप्रत्यय, ‘ङीबभावान्न हल्ङ्याब्भ्य’ इति सुलोप। तदुक्तम ‘अवीलक्ष्मीतरीतन्त्रीह्रीधीश्रीणामुणादित। स्त्रीलिङ्गानाम मीषा तु न सुलोप कदाचन॥’ इति। एते ङीबन्ता न

१ मन्द्रस्मितस्य।

२ अमृत स्रवति क्षरति य स तेन सुधानिष्यन्दिनेव अमृतधारा वर्षतेव इत्यर्थ ।

अप्यन्यपुष्टा१ प्रतिकूलशब्दा२
श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥ ४५ ॥
प्रवातनीलोत्पलनिविशेषम्
अधीरविप्रेक्षितमायताक्ष्या३ ।
तया गृहीतं नु मृगाङ्गनाभ्यः
ततो गृहीतं नु मृगाङ्गनाभिः ॥ ४६ ॥
तस्याः शलाकाञ्जननिर्मितेव
कान्तिर्भ्रुवोरायतलेखयोर्या४ ।

भवन्ति इत्यर्थः । श्रोतुः जनस्य प्रतिकूलशब्दा कर्णकठोरनादा भवति इति शेषः ॥ ४५ ॥

प्रवातेति । प्रवाते प्रभूतवातस्थले यत् नीलोत्पलं तत निर्विशेषं निर्भेदं तत्सदृशम् इत्यर्थः । अधीरविप्रेक्षितं चकितविलोकितम् आयताक्ष्या विशालनेत्रया पार्व्वत्या मृगाङ्गनाभ्यः हरिणीभ्यः गृहीतम् अभ्यस्तं नु, अथवा मृगाङ्गनाभिः ततः तस्याः पार्व्वत्याः । पञ्चम्यास्तसिल् । गृहीतं नु । अत्र विवक्षितस्य परस्परग्रहणस्योत्प्रेक्षणादुत्प्रेक्षेति केचित्, तदुपजीविसन्देहालङ्कार इत्यन्ये, उभयोः सङ्कर इत्यपरे ॥ ४६ ॥

तस्या इति । आयतलेखयोः दीर्घरेखयोः तस्याः पार्व्वत्याः भ्रुवोः सम्बन्धिनी शलाकया अञ्जनेन निर्मिता इव स्थिता या

१ अन्यपुष्टा अन्येन काकेन पुष्टा पालिता । परभृता किल अन्तरीक्षगमनात् प्राक् स्वमपत्यजातं अन्यद्विजैः पोषयन्ति ।

२ प्रतिकूलः शब्दः यस्याः सा ।

३ (आयते अक्षिणी यस्याः सा आयताक्षी तया ।)

४ आयतलेखयोः आयते लेखे ययोः ते आयतलेखे तयोः ।

ता वीक्ष्य लीलाचतुरामनङ्ग
स्वचापसौन्दर्य्यमद[१] मुमोच ॥ ४७ ॥
लज्जा तिरश्चा[२] यदि चेतसि स्यात्
असंशय पर्व्वतराजपुत्र्या ।
त केशपाश प्रसमीक्ष्य कुर्य्युः
र्वालप्रियत्व शिथिल चमर्य्य ॥ ४८ ॥

कान्ति लीलाचतुरा विलाससुभगा ता कान्ति वीक्ष्य अनङ्ग स्वचापसौन्दर्य्येण य मद त मुमोच इति सौन्दर्य्यातिशयोक्ति ॥ ४७ ॥

लज्जेति। तिरश्चा तिर्य्यगजातीना चेतसि लज्जा स्यात् यदि संशयाभाव असंशय सन्देहो नास्ति इत्यर्थ । पर्व्वतराजपुत्र्या 'शार्ङ्गरवाद्यञो ङीन्' इति ङीन्। त प्रसिद्ध केशपाश केशकलापम 'पाश पक्षश्च हस्तश्च कलापार्था कचात् परे' इत्यमर। प्रसमीक्ष्य दृष्ट्वा चमर्य्य मृगीविशेषा (बाला प्रिया यासाम इति विग्रहे बालप्रिया तासा भाव बालप्रियत्व प्रियबालत्वम् इत्यर्थ । आहिताग्न्यादिपाठात् वा परनिपात, 'त्वतलोर्गुणवचनस्य' इति पुवद्भाव । शिथिल कुर्य्युः निर्लज्जत्वात् शिथिलयन्ति इत्यर्थ । अत एवात्र निर्लज्जत्वकरणहेतोराद्यपादे वाक्यार्थत्वेनोक्त्या काव्यलिङ्गाख्यालङ्कार । तदुक्तम् 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्। इति ॥४८ ॥

---

१ मद गर्व्व ।

२ तिर वक्र अञ्चन्ति गच्छन्ति ये ते तिर्य्यञ्च तेषाम ।) तिरस्शब्दपूर्व्वात् अञ्चधातो क्विप 'तिरस् इत्यस्य तिरि' आदेशश्च ।

सर्व्वोपमाद्रव्यसमुच्चयेन
यथाप्रदेशं विनिवेशितेन ।
सा निर्मिता विश्वसृजा१ प्रयत्नात्
एकस्थसौन्दर्य्यदिदृक्षयेव२ ॥ ४९ ॥

तां नारदः कामचरः कदाचित्
कन्यां किल३ प्रेक्ष्य पितुः समीपे ।

सर्व्वेति । किं बहुना, सा पार्व्वती विश्वसृजा विधात्रा, एकत्र तिष्ठति इति एकस्थं तस्य सौन्दर्य्यस्य सर्व्ववस्तुगतस्य इत्यर्थः । दिदृक्षया इव प्रयत्नात् यथाप्रदेशं क्रमात् विनिवेशितेन स्थापितेन सर्व्वेषाम् उपमाद्रव्याणां चन्द्रारविन्दाद्युपमावस्तूनां समुच्चयेन समाहारेण निर्म्मिता । दिदृक्षयेवेति फलोत्प्रेक्षा दर्शनार्थित्वाद्विश्वसृज इति ॥ ४९ ॥

तामिति । कामेन इच्छया चरति इति कामचरः नारदः कदाचित् पितुः हिमवतः समीपे कन्यां तां पार्व्वतीं प्रेक्ष्य किल प्रेम्णा न तु अन्यथा हरस्य शिवस्य अर्द्धं हरति इति अर्द्धहरा 'हरतेरनुद्यमनेऽच्' इति अच्प्रत्ययः । शरीरस्य अर्द्धहरां शरीरार्द्धहराम् कुलधुरन्धरादिवदवयवद्वारा समुदायविशेषकत्वात् समासः अन्यथा तु अर्द्धस्य समप्रविभागवचनत्वादर्द्धशरीरेति स्यात् । एकवधूम् असपत्नीकां भार्य्याम् पूर्व्वकालेत्यादिना समासः । भविनीं भाविनीं समादिदेश, हरस्य

१ विश्वं सृजति यः सः विश्वसृट् तेन । विश्वशब्दपूर्व्वात् सृजधातोः क्विप् ।

२ दिदृक्षया द्रष्टुमिच्छया । दृश्धातोः सन्नन्तात् अ, ततः स्त्रीत्वात् आप् ।

३ किल इति ऐतिह्ये ।

समादिदेशैकवधूं¹ भवित्री
प्रेम्णा शरीरार्द्धहरां हरस्य ॥ ५० ॥
गुरुः प्रगल्भेऽपि वयस्यतोऽस्या-
स्तस्थौ निवृत्तान्यवराभिलाषः ।
ऋते कृशानोर्न हि मन्त्रपूतम्
अर्हन्ति तेजांस्यपराणि हव्यम् ॥ ५१ ॥
अयाचितारं न हि देवदेवम्
अद्रिः सुतां ग्राहयितुं शशाक।

अर्द्धाङ्गहारिणी एकपत्नी भविष्यति इति आदिष्टवान् इत्यर्थः ॥ ५० ॥

गुरुरिति। गुरुः पिता 'गुरू गीष्पतिपित्राद्यौ' इत्यमरः। अतः नारदवचनात् हेतोः अस्याः पार्व्वत्याः प्रगल्भे वयसि अपि यौवने सति अपि, निवृत्तः अन्यस्मिन् वरे जामातरि अभिलाषः यस्य सः तथोक्तः सन् 'वरो ना रूपजामात्रो' इति वैजयन्ती। तस्थौ वरान्तरं नान्विष्टवान् इत्यर्थः। ननु कुतोऽसौ निर्बन्धः इत्यत आह, ऋते इति। तथाहि, मन्त्रैः पूतं संस्कृतं हूयते इति हव्यम् आज्यादिकं कृशानोः पावकात् ऋते कृशानुं विना 'अन्यारादितरर्त्ते' इत्यादिना पञ्चमी। अपराणि तेजांसि सुवर्णादीनि न अर्हन्ति न भजन्ति इत्यर्थः, ईश्वरादन्यस्य तद्योग्यस्याभावादुपेक्षा इति भावः ॥ ५१ ॥

तर्हि तमेवाहूय दीयतामित्याशङ्क्याह, अयाचितारमिति। अद्रिः हिमवान् अयाचितारम् अयाचमानं देवदेवं महादेवं सुतां पार्व्वतीं ग्राहयितुं स्वयम् आहूय परिग्राहयितुं न शशाक

¹ समादिदेश कथयामास।

अभ्यर्थनाभङ्गभयेन१ साधु

माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे२ ॥ ५२ ॥

यदैव पूर्ब्बे जनने शरीरं

सा दक्षरोषात् सुदती ससर्ज ।

तदा प्रभृत्येव विमुक्तसङ्गः३

पतिः पशूनामपरिग्रहोऽभूत् ॥ ५३ ॥

न उतमेहे। तथाहि साधुः सज्जन साधुर्वार्द्धुषिके चारौ सज्जने चाभिधेयवत् इति विश्वः । अभ्यर्थनाभङ्गभयेन याच्ञा वैफल्यभीत्या इष्टे अपि अर्थे विषये माध्यस्थ्यम् औदासीन्यम् अवलम्बते ॥ ५२ ॥

न च तस्य रतिरुचित किन्तु उपायान्तरं चिन्तितवानिति वक्तु प्रस्तौति यदेति। शोभना दन्ता यस्याः सा सुदती 'वयसि दन्तस्य दतृ' इति दत्रादेशः, 'उगितश्च' इति ङीप्। सा पार्व्वती पूर्व्वे जनने पूर्व्वस्मिन् जन्मनि 'पूर्व्वादिभ्यो नवभ्यो वा' इति स्मिन्नादेशविकल्पः । पूर्व्वे ज्वलने इति पाठे पर्व्वे दाक्षायणीत्वे ज्वलने योगाग्नौ। यदा यस्मिन् काले दक्षरोषात् शरीरं देहं ससर्ज तत्याज, तदाप्रभृति एव तदादि एव यथा तथा पशूनां पतिः शिवः विमुक्तसङ्गः त्यक्तविषयासङ्गः सन् अपरिग्रहः अपत्नीकः अभूत् स्मारान्तरं न परिजग्राह इत्यर्थः 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः ॥ ५३ ॥

१ अभ्यर्थनायाः भङ्गः तस्मात् भयं तेन ।

२ माध्यस्थ्यं मध्ये तिष्ठति यः स मध्यस्थः उदासीनः तस्य भावः तत् ।

३ विमुक्तः सङ्गः येन सः इति बहुव्रीहिः ।

स कृत्तिवासास्तपसे यतात्मा
गङ्गाप्रवाहोक्षितदेवदारु ।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि१
किञ्चित् क्वणत्किन्नरमध्युवास ॥ ५४ ॥
गणा नमेरुप्रसवावतंसा
भूर्जत्वचः स्पर्शवतीर्दधानाः ।

स इति । कृत्तिवासाः चर्माम्बरः 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः । यतात्मा नियतचित्तः स पशुपतिः तपसे तपोऽर्थं गङ्गाप्रवाहेण उक्षिताः सिक्ताः देवदारवः यस्मिन् तत् तथोक्तम् मृगनाभिगन्धि कस्तूरीगन्धवत् कस्तूरीमृगसञ्चारात् इति भावः । 'मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम्' इत्यमरः । क्वणन्तः गायन्तः किन्नराः यस्मिन् तत् तथोक्तं किञ्चित् किमपि हिमाद्रेः प्रस्थं सानुम् अध्युवास कुत्रचित् प्रस्थे उवास इत्यर्थः 'उपान्वध्याङ्वसः' इति आधारस्य कर्मत्वम् । 'प्रस्थोऽस्त्री सानुमानयोः' इत्यमरः ॥ ५४ ॥

गणा इति । गणाः प्रमथगणाः । 'गणाः प्रमथसङ्ख्यौघाः' इति वैजयन्ती । नमेरुप्रसवावतंसाः सुरपुन्नागकुसुमशेखराः । 'नमेरुः सुरपुन्नागः' इति विश्वः । स्पर्शवतीः सुखस्पर्शाः मृद्वीः इत्यर्थः । प्रशंसायां मतुप् । भूर्जत्वचः भूर्जवल्कलानि दधानाः वसानाः इत्यर्थः (मनःशिलाभिः धातुविशेषैः विच्छुरिताः अनुलिप्ताः सन्तः (शिलायाः भवं शैलेयं गन्धौषधिविशेषः । शिलायाः 'स्त्रीभ्यो ढक्' इति भवार्थे ढक् । 'शिलाजतु च शैलेयम्' इति यादवः । तेन नद्धेषु व्याप्तेषु शिलातलेषु निषेदुः उपविविशुः इत्यर्थः ॥ ५५ ॥

१ मृगनाभिगन्धो विद्यते यस्मिन् तत् । अस्त्यर्थे इन् ।

मन.शिलाविच्छुरिता निषेदु.
शैलेयनद्धेषु[1] शिलातलेषु ॥ ५५ ॥

तुषारसङ्घातशिला. खुराग्रै
समुल्लिखन् दर्पकल ककुद्मान् ।
दृष्ट कथञ्चिद्गवयैर्विविग्नै
असोढसिंहध्वनिरुन्ननाद ॥ ५६ ॥

तत्राग्निमाधाय समित्समिद्ध[2]
स्वमेव मूर्त्त्यन्तरमष्टमूर्त्ति ।

तुषारेति । 'तुषारसङ्घाता [illegible] ते एव शिला [illegible]ता ) खुराग्रै समुल्लिखन् विदारयन् (दर्पेण कल मधुरध्वनि यस्य स दर्पकल ) विविग्नै भीतै गवयै गोसदृशमृगविशेषै कथञ्चित् कृच्छ्रेण दृष्ट (ककुदमस्यास्तीति ककुद्मान् वृषभ / असोढ सिंहाना ध्वनि येन स सिंहध्वनिम ) असहमान सन् उन्ननाद उच्चै ननाद जगर्ज्ज इत्यर्थ । स्वभावोक्ति-रलङ्कार । तदुक्तम 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम' इति ॥ ५६ ॥

तत्रेति । तपस फलानाम इन्द्रत्वादीना स्वय विधाता जनयिता दाता इत्यर्थ अष्टौ मूर्त्तय यस्य स अष्टमूर्त्ति ईश्वर 'भूतार्कचन्द्रयज्वानो मूर्त्तयोऽष्टौ प्रकीर्त्तिता इति । तत्र प्रस्थे स्व स्वकीयमेव मूर्त्त्यन्तर मूर्त्तिभेद समिद्भि समिद्ध दीपितम अग्निम आधाय प्रतिष्ठाप्य नापि कामेन कयापि फलकामनया तप चचार चक्रे 'प्रयोजनमनुद्दिश्य न मन्दोऽपि

१ नह्धातो कर्म्मणि क्त ।
२ समिध यज्ञकाष्ठानि ।

स्वय विधाता तपस फलाना
केनापि कामेन तपश्चचार ॥ ५७ ॥
अनर्घ्यमर्घ्येण१ तमद्रिनाथ
स्वर्गौकसामर्चितमर्चयित्वा ।
आराधनायास्य२ सखीसमेता ३
समादिदेश प्रयता तनूजाम्४ ॥ ५८ ॥

प्रवर्त्तते' इति न्यायात कामेनेत्युक्तम तस्यावाप्तसमस्तकाम त्वात केनापीत्युक्तम ॥ ५७ ॥

अनर्घ्यमिति । अद्रीणां नाथ [illegible] मूल्यम अर्हति इति अर्घ्य 'मूल्ये पूजाविधावर्घ' इत्यमर । 'दण्डादिभ्यो य' इति यप्रत्यय । अर्घ्य न भवति इति अनर्घ्य तम अनर्घ्यम् अमूल्यम इत्यर्थ, स्वर्ग ओक स्थान येषा तेषा स्वर्गौकसा देवानाम अर्चित देवै पूज्यमानम इत्यर्थ 'मतिबुद्धिपूजार्थेभ्यश्च इति वर्त्तमाने क्त, क्तस्य च वर्त्तमाने इति षष्ठी । तम ईश्वरम अर्घ्येण पूजार्थोदकेन 'पादार्घाभ्याञ्च इति यत्प्रत्यय । 'षट तु त्रिष्वर्घ्यमर्घार्थे पाद्य पादाय वारिणि' इत्यमर । अर्चयित्वा पूजयित्वा अस्य ईश्वरस्य आराधनाय सखीभ्या जयाविजयाभ्या समेता प्रयता नियता तनूजा सुता समादिदेश आज्ञापयामास ॥ ५८ ॥

१ अर्घाय पूजाविधये इद अर्घ्य तेन ।
२ अस्येति कृद्योग कर्म्मणि षष्ठी ।
३ समेता सङ्गताम । सम आपूर्व्वात इधातो क रि क्त ।
४ तन्वा शरीरात जायते या सा ताम ।

प्रत्यर्थिभूतामपि१ तां समाधेः
शुश्रूषमाणां गिरिशोऽनुमेने।
विकारहेतौ सति विक्रियन्ते
येषां न चेतांसि त एव धीराः ॥ ५९ ॥
अवचितबलिपुष्पा वेदिसम्मार्गदक्षा
नियमविधिजलानां बर्हिषाञ्चोपनेत्री।

प्रत्यर्थीति। गिरिशः शिवः समाधेः प्रत्यर्थिभूतां प्रतिपक्षभूतामपि। सुप्सुपेति समासः। श्रोतुमिच्छन्तीं शुश्रूषमाणां सेवमानाम्। सेवका हि सेव्ये दत्तकर्णा भवन्ति। इच्छार्थे सन्प्रत्ययः, 'ज्ञाश्रुस्मृदृशां सनः' इति आत्मनेपदम्। तां पार्वतीम् अनुमेने अङ्गीचकार न प्रतिषिद्धवानित्यभिप्रायः न चैतावता धीरस्य कश्चिद् विकारः इत्याशयः। धीरत्वमेवार्थान्तरन्यासनाह विकारेति। विकारस्य प्रकृतेरन्यथात्वस्य हेतौ स्त्रीसन्निधानादिकारणे सति विद्यमानेऽपि येषां चेतांसि न विक्रियन्ते न विकृतिं नीयन्ते ते एव धीराः। विक्रियन्ते इति कर्म्मणि लट् ॥ ५९ ॥

शुश्रूषाप्रकारमेवाह अवचितेति। सुकेशी शोभनमूर्द्धजा 'स्वाङ्गाच्चोपसर्ज्जनादसयोगोपधात्' इति ङीप्। सा पार्व्वती अवचितानि लूनानि बलिपुष्पाणि पूजाकुसुमानि यया सा वेदे नियमवेदिकायाः सम्मार्गे सम्मार्ज्जने दक्षा, नियमविधेः नित्यकर्म्मानुष्ठानस्य यानि जलानि तेषां बर्हिषां कुशानां च उपनेत्री आनेत्री सती तस्य गिरिशस्य शिरसि चन्द्रस्य पादैः

१ प्रति विरुद्धं अर्थयते या सा प्रत्यर्थिनी प्रत्यर्थिनीभूता प्रत्यर्थिभूता ताम्।

गिरिशमुपचचार१ प्रत्यह सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादै ॥६०॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
उमोत्पत्तिर्नाम प्रथम सर्ग.।

रश्मिभि ) 'पादा रश्म्यङ्घ्रितुर्यांशा इत्यमर । नियमितपरिखेदा निवर्त्तितपरिश्रमा सती अहनि अहनि प्रत्यहम । अव्यय विभक्तिसमीपसमृद्धि' इत्यादिना नियतार्थे अव्ययीभाव नपुसकादन्यतरस्याम्' इति अच्प्रत्यय । गिरिशम उपचचार शुश्रूषाञ्चक्रे ॥ ६० ॥

इति श्रीमन्महामहोपाध्याय कोलाचलमल्लिनाथ सूरिविरचिताया
कुमारसम्भवव्याख्याया सञ्जीवनीसमाख्याया प्रथम सर्ग ।

१ गिरौ शेते य स गिरिश तम । गिरिशब्दपूर्व्वात शीधातो कर्त्तरि ड । अथवा गिरिरस्यास्तीति लोमादित्वात श ।

## द्वितीय सर्ग ।

तस्मिन् विप्रकृता काले तारकेण दिवौकस ।
तुरासाहं पुरोधाय धाम स्वायम्भुवं ययु ॥ १ ॥
तेषामाविरभूद् ब्रह्मा परिम्लानमुखश्रियाम्[१] ।

तस्मिन्निति । तस्मिन काले पार्व्वतीशुश्रूषाकाले तारकेण तारकनाम्ना वज्रणखपुत्रेण केनचित असुरेण विप्रकृता उपद्रुता दिवम् ओकः स्थान येषा ते दिवौकस देवा । 'दिव स्वर्गेऽन्तरीक्षे च' इति विश्व । द्यौ ओक इति पक्षे पृषोदरादित्वात् साधु । तुर त्वरित साहयति अभिभवति इति तुरासाट । साहयतेश्चौरादिकात् क्विप् 'नहिवृतिवृषि' इत्यादिना पूर्व्वपदस्य दीर्घं प्रकृतिग्रहणे ण्यन्तिपदिकस्यापि ग्रहणात मुग्धबोधकारस्तु तुराशब्द टाबन्त इत्याचष्टे । त तुरासाहं इन्द्रम् । अजादिषु साड्रूपत्वाभावात् 'सहे साड स' इति षत्व न भवति । पुरोधाय पुरस्कृत्य स्वयम्भुव ब्रह्मण इद स्वायम्भुवम । सञ्ज्ञापूर्व्वकविधेरनित्यत्वात् 'ओर्गुण' इति गुणो न । धाम स्थान ययु ब्रह्मलोक जग्मु इत्यर्थ ॥ १ ॥

तेषामिति । परिम्लाना परिक्षीणा मुखश्री मुखकान्ति येषा तथोक्ताना तेषा देवाना ब्रह्मा सुप्तपद्मानां मुकुलितारविन्दाना सरसा प्रातर्दीधितिमान् सूर्य्य इव आविरभूत प्रकाशोऽभूत इत्यर्थ । 'प्रकाशे प्रादुराविः स्यात्' इत्यमर । सूर्य्योपमानेन तेषा ग्लानिहरणत्व सूचितम् । अत्रोपमालङ्कार ।

---

१ परिम्लाना परिपूर्व्वात् म्लाधातोरकर्म्मकात् कर्त्तरि क्त ।

सरसां सुप्तपद्मानां[1] प्रातर्दीधितिमानिव ॥ २ ॥
अथ सर्व्वस्य धातारं ते सर्व्वे सर्व्वतोमुखम् ।
वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥ ३ ॥
नमस्त्रिमूर्त्तये[2] तुभ्यं प्राक् सृष्टेः केवलात्मने ।

तल्लक्षणं तु 'स्वतः सिद्धेन भिन्नेन सम्मतेन च धर्म्मतः । साम्यमन्येन वर्ण्यस्य वाच्यञ्चेदेकपदोपमा ॥' इति ॥ २ ॥

अथेति । अथ आविर्भावानन्तरं सर्व्वे ते देवाः सर्व्वतः समन्ततः मुखानि यस्य तं सर्व्वतोमुखं चतुर्मुखम् इत्यर्थः वाचां विद्यानाम् ईशं सर्व्वस्य जगतः धातारं स्रष्टारं ब्रह्माणं प्रणिपत्य नमस्कृत्य अर्थादनपेताभिः अर्थ्याभिः अर्थयुक्ताभिः इत्यर्थः 'धर्म्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । वाग्भिः उपतस्थिरे तुष्टुवुः इत्यर्थः, उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यम् इति आत्मनेपदम् ॥ ३ ॥

स्तुतिप्रकारमाह नम इत्यादिभिर्द्वादशभिः श्लोकैः नम इति । हे भगवन्नित्याध्याहार्य्यं व्याख्येयम् । सृष्टेः प्राक् 'अन्यारात्' इत्यादिना अञ्चूत्तरपदयोगेन पञ्चमी । केवलात्मने एकरूपाय 'आत्मा वा इदमेक एवाग्र आसीत्' इति श्रुतेः । 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इत्यमरः । पश्चात् सृष्टिप्रवृत्तिकाले विभज्यते अनेन इति विभागः गुणानां सत्वादीनां त्रयमेव विभागः यस्य तस्मै 'गुणाः सत्वं रजस्तमः' इत्यमरः । भेदम् उपाधिं स्रष्टृत्वादिकम् इत्यर्थः उपेयुषे प्राप्तवते 'उपेयिवाननाश्वाननूचानश्च' इति निपातः । अत एव

---

१ सुप्तानि निद्रितानि निमीलितानि इति यावत् पद्मानि येषु तानि तेषाम् । सुप्तेति स्वपधातोरकर्म्मकात् कर्त्तरि क्तः ।

२ तिस्रः मूर्त्तयः यस्य सः तस्मै इति बहुव्रीहिः ।

गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ ४ ॥
यदमोघमपामन्तरुप्त१ वीजमज त्वया ।
अतश्चराचर विश्व प्रभवस्तस्य गीयसे ॥ ५ ॥
तिसृभिस्त्वमवस्थाभि २ महिमानमुदीरयन३ ।

त्रिमूर्त्तये ब्रह्मविष्णुरुद्ररूपिणे तुभ्य नम 'नम स्वस्ति इत्यादिना चतुर्थी। उक्त च 'नमो रजोजुषे सृष्टौ स्थितौ सत्व मयाय च। तमोरूपाय सहारे त्रिरूपाय स्वयम्भुवे॥' इति ।४

यदिति। न जायते इति अज हे अज। अपा जलानाम् अन्त त्वया यत अमोघम् अवन्ध्य वीज वीर्य्यम् उप्त निक्षिप्तम्। सक्तमिति पाठे विसृष्टम इत्यर्थ । 'शुक्र तेजोरेतसी च वीज वीर्य्येन्द्रियाणि च' इत्यमर । अत ते वीजात् चराचर स्थावरजङ्गमात्मकम्। समाहारे द्वन्द्वैकवचनम् । [illegible] उत्पन्नम् इति शेष । तस्य विश्वस्य प्रभवति अस्मात् इति प्रभव कारण गीयसे। अत्र मनु 'अप एव ससर्ज्जादौ तासु वीजमवासृजत्। तदण्डमभवद्धैम सहस्रांशुसमप्रभम् ॥ इति। 'अदश्चराचर विश्व प्रसवस्तस्य गीयते इति पाठे अद इद चराचर विश्व तस्य वीजस्य प्रसव गीयते लोके इति शेष ॥ ५ ॥

तिसृभिरिति। एक सृष्टे प्राक् केवल त्व तिसृभि अवस्थाभि त्रैगुण्यमयीभि हरिहरब्रह्मस्वरूपाभि महिमान निजशक्तिम् उदीरयन विजृम्भयन प्रलयस्थितिसर्गाणाम् अन्त स्थित्युत्पत्तीना कारणता गत । इद पश्चाद्भेदमुपेयुषे इत्यस्य विवरणम् अतो न गतार्थत्वदोष ॥ ६ ॥

१ वपधातो कर्म्मणि क्त ।

२ अवस्थाभि मूर्त्तिभि ।

३ महिमान महतो भाव महिमा तम् महदिति शब्दात् भावे इमन

प्रलयस्थितिसर्गाणाम् एक कारणता गत ॥ ६ ॥
स्त्रीपुंसावात्मभागौ ते भिन्नमूर्त्तेः सिसृक्षया।
प्रसूतिभाज १ सर्गस्य तावेव पितरौ स्मृतौ ॥ ७ ॥
स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते।

भूतसृष्टिकर्त्तृत्वमुक्त्वा मिथुनसृष्ट्यर्थं मूर्त्तिमतो ब्रह्मणो भेदमाह, स्त्रीपुंसाविति। स्त्री च पुमांश्च स्त्रीपुंसौ 'अचतुर' इत्यादिना अच्प्रत्ययान्तो निपात। सिसृक्षया स्रष्टुमिच्छया भिन्नमूर्त्तेः द्विधाकृतविग्रहस्य ते तव आत्मन देहस्य भागौ आत्मभागौ 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इति विश्व। तौ एव भागौ प्रसूतिभाज उत्पत्तिभाज, सृज्यते इति सर्ग तस्य निजसृष्ट इत्यर्थ, माता च पिता च पितरौ 'पिता मात्रा' इति एकशेष। स्मृतौ मोक्तौ इति शेष। अत्र मनु, 'द्विधा कृतात्मनो देहम् अर्द्धेन पुरुषोऽभवत्। अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभु ॥' इति ॥ ७ ॥

स्वकालेति। स्वकालस्य परिमाणेन 'चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते' इत्युक्तरूपेण व्यस्त विभक्त रात्रिन्दिव रात्र्यहनी यस्य तस्य। यद्यप्यचतुरादिसूत्रेण रात्रौ च दिवा च रात्रिन्दिवम् इति सप्तम्यर्थे वृत्तौ द्वन्द्व इत्युक्त तथापि दोषामन्यमहर्दिवामन्या रात्रिरित्यादौ कर्म्मवत् अत्रापि प्रातिपदिकार्थवृत्तित्व कथञ्चित् प्रयोगबलादाश्रयणीयम्। ते तव यौ तु स्वप्नावबोधौ तौ एव भूताना प्रलयोदयौ संहार सृष्टी। यदाहुः, 'यदा स देवो जागर्त्ति तदेव चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्व्वं प्रलीयते॥' इति। एतच्च

---

१ प्रसूति भजते य स तस्य ज र्गस्य इत्यर्थ। भजधातो कर्त्तरि विच्।

**यौ तु स्वप्नावबोधौ[1] तौ भूतानां प्रलयोदयौ ॥ ८॥**
**जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ।**
**जगदादिरनादिस्त्वं जगदीशो निरीश्वरः[2] ॥ ९ ॥**
**आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।**

दैनन्दिनसृष्टिप्रलयाभिप्रायकं महाप्रलयस्य ब्रह्मणो वर्षशतान्ता भावित्वात् ॥ ८ ॥

जगदिति । हे भगवन् ! त्वं जगद्योनिः जगत्कारणं स्वयम् अयोनिः आदित्वात् अकारणकः, त्वम् अन्तयति इति अन्तः । पचाद्यच् । जगतः अन्तः जगत्संहर्त्ता स्वयं निरन्तकः नित्यत्वात् अन्तरहितः, त्वं जगताम् आदिः जगदादिः सृष्टेः प्रागपि सन् इत्यर्थः अत एव त्वम् अनादिः आदिरहितः, त्वं जगताम् ईशः नियन्ता स्वयं निरीश्वरः अनियम्य इत्यर्थः, 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिरेवात्र प्रमाणम् । अत्र अयोनिरित्यादौ नञ्तत्पुरुषाश्रयणे विरोधः बहुव्रीहिणा तु तत्परिहार इति विरोधाभासालङ्कारः । यथाहुः 'विरोधाभासत्वे विरोधः' इति ॥ ९ ॥

तव तु न प्रपञ्चस्येव जन्मतिरोधानज्ञानेषु परापेक्षेत्याह, आत्मानमिति । हे भगवन् ! त्वं आत्मानं लोकानुग्रहार्थं ब्रह्मरूपेण उत्पिपादयिषितं स्वस्वरूपम् आत्मना एव वेत्सि जानासि सर्व्वापि क्रिया कर्त्तव्यार्थज्ञानपूर्व्विका इति भावः, तथा आत्मानम् आत्मना एव आत्मन्येव इत्यत्रापि सम्बध्यते स्वस्मिन्नेव सृजसि अधिष्ठानमपि स्वयमेव इत्यर्थः 'स्वे महिम्नि प्रतिष्ठितम्' इति श्रुतेः । कृतिना समर्थेन इदं सर्व्वं

1 स्वप्नश्च अवबोधश्च तौ निद्राजागरणे ।

2 ईष्टे प्रभवति यः सः ईश्वरः ईश्धातोः कर्त्तरि वरप् ।

आत्मना कृतिना च त्वम् आत्मन्येव प्रलीयसे ॥१०॥
द्रव सङ्घातकठिन स्थूल सूक्ष्मो लघुर्गुरु ।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्य ते विभूतिषु ॥११॥
उद्घात प्रणवो यासा न्यायैस्त्रिभिरुदीरणम्।

सम्बध्यते। आत्मना स्वेनैव आत्मन्येव प्रलीयसे स्वस्मिन्नेव प्रलीनो भवसि। लीयतेर्दैवादिकात कर्त्तरि लट। 'प्रकृत्यादिभ्य उपसख्यानम्' इति वार्त्तिकात् सर्व्वत्र आत्मना इति तृतीया। न हि ते प्रपञ्चस्येव ज्ञानोत्पत्तिलयेषु परापेक्षेति लिफतार्थ ॥ १० ॥

द्रव इति। त्वम इति अनुषज्यते। हे भगवन। त्व च सरित्समुद्रादिवत रसात्मक असि, सघातेन निविडसयोगेन कठिन महीधरादिवत, स्थूल इन्द्रियग्रहणयोग्यो घटादिवत सूक्ष्म अतीन्द्रिय परमाण्वादिवत, लघु उत्पतनयोग्यतूलादिवत, गुरु मारुतिवत् अचलनीय , व्यक्त कार्य्यरूप असि व्यक्तेतर कारणरूपश्च असि। एव विभूतिषु अणिमादिषु त तव प्रकामस्य भाव प्राकाम्य यथाकामत्वम ॥ ११ ॥

उद्घात इति । हे भगवन। यासा गिरा वाचाम उद्घात उपक्रम प्रणव ओकारात्मक 'ओकारप्रणवौ समौ' इति 'स्यादभ्यादानमुद्घात आरम्भ इति च अमर । इदमुपसहारस्याप्युपलक्षणम्। ब्रह्मण प्रणव कुर्य्यात् आदावन्ते च सर्व्वत । स्रवत्यनोङ्कृत पूर्व्व परस्ताच्च विशीर्य्यते ॥' इति निरुक्तपरिशिष्टयोर्योक्त। नीयन्ते एभि अर्थविशेषा इति न्याया स्वरा । उक्त च, 'स्वरविशेषादर्थप्रतिपत्ति । यथेन्द्रशत्रु स्वरतोऽपराधात्' इति। यासा गिरा त्रिभि न्यायै उदात्तानुदात्तस्वरितै स्वरै उदीरणम उच्चारण यासां कर्म्म प्रतिपाद्यम इत्यर्थ, यच्च

कर्म्म यज्ञ. फल स्वर्ग तासा त्व प्रभवो गिराम्॥ १२ ॥
त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम्।
तद्दर्शिनमुदासीन१ त्वामेव पुरुष विदु ॥ १३ ॥
त्व पितृणामपि पिता देवानामपि देवता।
परतोऽपि परश्चासि विधाता वेधसामपि ॥ १४ ॥

ज्योतिष्टोमादि न तु चैत्यवन्दनादि इति भाव । फल स्वर्ग कर्म्मद्वारा इति शेष । कर्म्मस्वर्गौ अस्मापवर्गयोरप्युपलक्षणम्। त्व तासा गिरा वेदानाम इत्यथ, प्रभवति अस्मात इति प्रभव कारण प्रणेता स्मर्त्ता वा मतभेदेन ॥ १२ ॥

सा॰ मतेन स्तुवन्ति, त्वामि ति । हे भगवन । त्वा पुरुषस्य अथ भोगापवर्गरूप तदथ प्रवर्त्तने इति पुरुषार्थप्रवर्त्तिनी प्रकृति त्रैगुण्यात्मक मूलकारणम्। प्रकृति पञ्चभूतेषु प्रधाने मनःकारणे इति यादव । आमनन्ति कथयन्ति । म्ना अभ्यासे इत धातो लिट्, 'पाघ्राध्मास्थाम्ना' इत्यादिना मनादेश । प्रकृतिपुरुषभेदाग्रहणात प्रकृतिपुरुषाभेदव्यपदेश । त्वामेव, ता प्रकृति साक्षित्वेन पश्यतीति तद्दर्शिनम उदासीन कूटस्थ पुरुष विदु विदन्ति । 'विदो लटो वा' इति झेर्जुसादेश । 'अजा मेका लोहितशुक्लकृष्णाम' इति श्रुतिरत्र प्रमाणम् ॥ १३ ॥

त्वमिति । हे भगवन । त्व पितृणाम अग्निष्वात्तादीनामपि पिता तेषामपि तर्पणीय इत्यर्थ, देवानाम् इन्द्रादीनामपि देवता तेषामपि यजनीय इत्यर्थ, परतोऽपि परश्चासि सर्व्वोत्तरोऽसि इत्यर्थ, 'इन्द्रियेभ्य परा ह्यर्था अर्थेभ्यश्च पर मन । मनसश्च परा बुद्धि बुद्धेरात्मा महान्परः । महत परमव्यक्तम्

१ उतपू॰ त आसधातो कर्त्तरि शानच्।

त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः।
वेद्यञ्च वेदिता चासि ध्याता ध्येयञ्च यत्परम्॥ १५॥
इति तेभ्यः स्तुतीः श्रुत्वा यथार्थाः१ हृदयङ्गमाः।
प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः॥ १६॥
पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता।

अव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः॥' इति सर्व्वोत्तरत्वाभिधानात्। वेधसा दक्षादीनामपि विधाता स्रष्टा असि॥ १४॥

त्वमेवेति। शश्वत् सिद्धः शाश्वतः। शैषिकोऽण्प्रत्ययः। यद्यपि 'कालाट्ठञ्' इति ठञपवादः अत एव सूत्रकारस्यापि प्रयोगः 'धर्मस्य विरोधः शाश्वतिकः' इति तथापि प्रयोगवशात् साधुरिति वामनः इति शाश्वतः प्रयुक्तः। शाश्वतः त्वमेव, हूयते इति हव्यं हविः आज्यादिकम्, जुहोतीति होता यजमानश्च असि भोज्यम् अभ्यवहार्य्यमन्नम् 'भोज्यं भक्ष्ये' इति निपातनात् कुत्वाभावः। भोक्ता अन्नादश्च असि, वेद्यं साक्षात्कार्य्यं वस्तु, वेदिता साक्षात्कर्त्ता च असि, ध्याता स्मर्त्ता, यत् परं वस्तु ध्येयं तच्च असि। साक्षात्कारसाधनभूतप्रत्ययविशेषप्रवाहो ध्यानम्॥ १५॥

इतीति। वेधा ब्रह्मा इति तेभ्यः देवेभ्यः। 'आख्यातोपयोगे' इत्यपादानत्वात् पञ्चमी। यथार्थाः सत्याः अत एव हृदयं गच्छन्तीति हृदयङ्गमाः मनोहराः। 'खच्प्रकरणे सुप्युपसंख्यानम्' इति खच्प्रत्ययः, 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः। स्तुतीः स्तोत्राणि श्रुत्वा प्रसादाभिमुखः अनुग्रहप्रवणः सन् दिवौकसः देवान् प्रत्युवाच॥ १६॥

अथ कविराह, पुराणस्येति। द्रव्यगुणक्रियाजातिभेदेन

---

१ यथाभूतः अर्थः अभिधेयः यासां ताः यथार्थाः ताः।

प्रवृत्तिरासीच्छब्दाना चरितार्था चतुष्टयी ॥ १७ ॥
स्वागत स्वानधीकारान प्रभावैरवलम्ब्य वः ।
युगपद्युगबाहुभ्य प्राप्तेभ्य प्राज्यविक्रमा ॥ १८॥
किमिदं द्युतिमात्मीया न बिभ्रति[१] यथा पुरा ।

चत्वार अवयवा यस्या इति चतुष्टयी चतुर्विधा। ‘सङ्ख्याया अवयवे तयप्’ इति तयप्, ‘टिड्ढाणञ्द्वयसज्’ इत्यादिना ङीप। शब्दाना प्रवृत्ति ,वैखरीप्रमुखा वा। उक्त च ‘वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा। द्योतितार्था च पश्यन्ती सूक्ष्मा वागनपायिनी॥ इति। पराणस्य पुरातनस्य। पृषोदरादित्वात् साधु । कवे कवयितु तस्य ब्रह्मण चतुर्भि मुखै समीरिता सती। ‘तद्धितार्थ’ इत्यादिना उत्तरपदसमास । समाहारे चतुर्मुखी इति स्यात। चरितार्था अन्वर्था आसीत्, चतुर्मुखोच्चारणाच्चातुर्विध्य सफलमासीत इत्यर्थ ॥ १७ ॥

भगवानाह, स्वागतमिति। हे प्राज्यविक्रमा प्रभूतपराक्रमा देवा । प्राज्य भूरि प्रभूतञ्च’ इति यादव । स्वान स्वकीयान अधीकारान नियोगान। उपसर्गस्य घञि’ इति वा दीर्घ । प्रभाव सामर्थ्यै अवलम्ब्य आस्थाय यथाधिकार स्थित्वापि इत्यर्थं युगपत् समकाल प्राप्तेभ्य , युगपत्प्राप्त्या महत् कार्य्यमनुमीयते इति भाव । युगबाहुभ्य दीर्घबाहुभ्य इत्यर्थ । आजानुबाहुत्व भाग्यलक्षणम्। व युष्मभ्यम् ‘बहुवचनस्य वस्नसौ’ इति वसादेश ‘कर्म्मणा यमभिप्रैति’ इत्यत्र कर्म्मपदेन क्रियाग्रहणात सम्प्रदानत्वम्। स्वागत शोभमानम् आगमनम्? काकुरत्रानुसन्धेया ॥ १८ ॥

किमिति। वत्सा इत्युत्तरश्लोकीय संम्बोधनमत्रापि अनु-

[१] धारयन्ति।

हिमक्लिष्टप्रकाशानि ज्योतीषीव मुखानि वः ॥ १९ ॥
प्रशमादर्चिषामेतत् अनुद्गीर्णसुरायुधम्[१] ।
वृत्रस्य[२] हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते ॥ २० ॥
किञ्चायमरिदुर्वारः[३] पाणौ पाशः प्रचेतसः ।
मन्त्रेण हतवीर्य्यस्य फणिनो दैन्यमाश्रितः ॥ २१ ॥

षञ्जनीयम् । हे वत्साः पुत्रकाः ! हिमेन नीहारेण क्लिष्टप्रकाशानि मन्दप्रभाणि ज्योतींषि नक्षत्राणि इव । 'दीप्तितारासुता शेषु ज्योतिः' इति शाश्वतः । वः युष्माकं मुखानि पुरा यथा पूर्व्वमिव आत्मीयां द्युतिं न बिभ्रति इदं किं किन्निबन्धनम् इत्यर्थः । किमिदमित्यनेन वाक्यार्थः परामृश्यते ॥ १९ ॥

उक्तमेव प्रपञ्चयति सप्तभिः श्लोकैः प्रशमादित्यादिभिः, प्रशमादिति । अर्च्चिषां तेजसां प्रशमात् निर्वाणात् अनुद्गीर्णसुरायुधम् अनुदितचित्रप्रभम् इत्यर्थः एतत् वृत्रस्य हन्तुः इन्द्रस्य कुलिशं वज्रं कुण्ठिता अश्रयः यस्य तत् कुण्ठिताश्रि कुण्ठितकोटि इव लक्ष्यते दृश्यते ॥ २० ॥

किञ्चेति । किञ्च, अयम् अरिदुर्वारः रिपुदुष्प्रधर्षः प्रचेतसः वरुणस्य 'प्रचेता वरुणः पाशी' इत्यमरः । पाणौ पाशः रज्जुः आयुधविशेषः, मन्त्रेण गारुडेन हतवीर्य्यस्य प्रतिबद्धशक्तेः फणिनः सर्पस्य दैन्यं शोच्यत्वम् आश्रितः । अत्र फणिनिष्ठदैन्यस्य पाशे असम्भवात् दैन्यमिव दैन्यमिति कल्पनादसम्भवद्धर्म्मसम्बन्धो निदर्शनालङ्कारः ॥ २१ ॥

---

१ अनुद्गीर्णं वहिरप्रकटीकृतं सुरायुधं इन्द्रचापं येन तत् ।

२ कृद्योगे कर्म्मणि षष्ठी ।

३ दुः दुःखेन वार्य्यते असौ इति दुर्वारः । दुरपूर्व्वात् वृधातोः कर्म्मणि खल् । अरिभिः दुर्वारः अरिदुर्वारः इति तृतीयातत्पुरुषसमासः ।

कुबेरस्य मनःशल्यं शंसतीव पराभवम् ।
अपविद्धगदो[१] बाहुः भग्नशाख इव द्रुमः ॥ २२ ॥
यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥ २३ ॥
अमी च कथमादित्याः[२] प्रतापक्षतिशीतलाः ।

कुबेरस्येति । अपविद्धा त्यक्ता गदा येन सः अपविद्धगदः अत एव भग्नशाखः द्रुमः इव स्थितः कुबेरस्य बाहुः मनःशल्यं दुःखहेतुत्वान्मनसः शल्यप्रायम् इत्यर्थः पराभवं शत्रुकृतम् इति शेषः, शंसति इव कथयति इव, लक्षणया अनुमापयति इत्यर्थः । बाहौ मुख्यकथनस्यासम्भवात् इवशब्दोऽयमत्र ॥ २२ ॥

यमोऽपीति । अस्तं नाशम् इता प्राप्ता । अस्तमिति मकारान्तमव्ययम् । 'तस्य द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति समासः । अस्तमिता त्विषः यस्य तेन निस्तेजस्केन दण्डेन यमोऽपि भूमिं विलिखन् अमोघेऽपि साफल्ये भावः अस्मिन् दण्डे निर्वाणालातस्य शान्तोल्मुकस्य अलातं नाम भूलेखनशलाका तस्य यत् लाघवं क्लैब्यं तत् कुरुते 'अलातमल्मुकं ज्ञेयम्' इति हलायुधः । 'निर्वाणोऽवाते' इति निपातनान्निष्ठानत्वम् । अत्रापि लाघवमिव लाघवमिति कल्पनान्निदर्शनालङ्कारः ॥ २३ ॥

अमी इति । प्रतापक्षत्या तेजसः क्षयेण शीतलाः अमी

---

१ अपविद्ध अपपूर्वात् व्यधधातोः कर्मणि क्तः ।

२ आदित्या इति द्वादशसंख्याविवक्षया बहुवचनम् । ते च 'धाता मित्रोऽर्यमा रुद्रो वरुणः सूर्य एव च । भगो विवस्वान् पूषा च सविता दशमः स्मृतः । एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ॥' इत्युक्ताः ।

चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥ २४ ॥
पर्य्याकुलत्वान्मरुतां[1] वेगभङ्गोऽनुमीयते।
अम्भसामोघसंरोधः प्रतीपगमनादिव[2] ॥ २५ ॥
आवर्ज्जितजटामौलिविलम्बिशशिकोटयः।
रुद्राणामपि[3] मूर्द्धानः क्षतहुङ्कारशंसिनः ॥ २६ ॥
लब्धप्रतिष्ठाः प्रथमं यत्र किं बलवत्तरैः।

आदित्याश्च द्वादशेति शेषः, कथं केन हेतुना इत्यर्थः चित्र न्यस्ताः चित्रलिखिता इव प्रकामम् अत्यन्तम् आलोकनीयताम् दृश्यतां गताः प्राप्ताः ॥ २४ ॥

पर्य्याकुलत्वादिति। मरुतां वायूनां सप्तसप्तानाम् इति शेषः पर्य्याकुलत्वात् स्खलितगतित्वात् हेतोः वेगस्य भङ्गः अम्भसां जलानां प्रतीपगमनात् उत्तानावरोहात् इत्यर्थः ओघस्य संरोधः प्रवाहप्रतिबन्ध इव अनुमीयते ॥ २५ ॥

आवर्ज्जितेति। आवर्ज्जितेषु परिम्लानेषु अवनतेषु जटानां मौलिषु जटाजूटेषु विलम्बिन्यः स्रंसिन्यः शशिकोटयः चन्द्ररेखाः येषां ते तथोक्ताः रुद्राणामपि एकादशानाम् इति शेषः, मूर्द्धानः क्षतं हुङ्कारं शंसन्तीति तथोक्ताः हुङ्कारध्वन्यनुमापकाः इत्यर्थः। हुङ्कारशस्त्रा हि रुद्रा इति भावः ॥ २६ ॥

लब्धेति। प्रथमं पूर्व्वं लब्धप्रतिष्ठाः लब्धस्थितयः, लब्धावकाशा इत्यन्यत्र, यत्र बलवत्तरैः पौरुषातिरेकात् प्रबलतरैः निरवकाशैः इत्यपरत्र, परैः शत्रुभिः उत्सर्गाः सामान्यशास्त्राणि

1 एकोनपञ्चाशत्संख्याविवक्षया बहुवचनम्।

2 प्रतीपं प्रतिकूलं गमनं तस्मात्।

3 एकादशसंख्याविवक्षया बहुवचनम्।

अपवादैरिवोत्सर्गा कृतव्यावृत्तय परे ॥ २७ ॥
तद् ब्रूत वत्सा किमित प्रार्थयध्व समागता. ।
मयि सृष्टिर्हि लोकाना रक्षा युष्मास्ववस्थिता ॥ २८ ॥
ततो मन्दानिलोद्धूत-कमलाकरशोभिना ।
गुरु नेत्रसहस्रेण नोदयामास वासव ॥ २९ ॥
स द्विनेत्र हरेश्चक्षु सहस्रनयनाधिकम् ।

'मा हिंस्यात्' इत्येवमादीनि, अपोद्यन्ते एभि इत्यपवादै 'गामालभेत' इत्यादिभि विशेषशास्त्रैरिव, कि कृतव्यावृत्तय कृतप्रतिष्ठाभङ्गा, कृतविषयसङ्कोचरूपबाधा इत्यन्वय। 'विषय सङ्कोच एव बाध' इत्याचार्य्या । निषेधशास्त्रस्य वैदिकहिंसा परिहारेण लौकिकमात्रे व्यवस्थापनात् विषयसङ्कोच इत्यल मतिगहनावगाहनेन ॥ २७ ॥

तदिति । तत् तस्मात् कारणात हे वत्सा पुत्रका । 'वत्स स्त्वर्भकपुत्राद्यो वर्षे वत्सन्तु वक्षसि' इति विश्व । स्वय पिता महत्वात वत्सा इत्यामन्त्रयते। सम्भूय आगता समागता इत सन्त कि प्रार्थयध्व किमिच्छत इत्यर्थ, ब्रूत। लोकरक्षको यूयमेव कर्त्तार इत्याह। मयि लोकाना सृष्टि रक्षा युष्मासु अवस्थिता। अतस्तदर्थमपि नास्ति मदपेक्षा इत्यर्थ ॥ २८ ॥

तत इति। तत भगवत्प्रश्नानन्तर वासव इन्द्र गुरु वृहस्पति '॥ गीष्पतिपित्राद्यौ' इत्यमर । मन्दानिलोद्धूत य कमलाकर स इव शोभते इति, तेन तथोक्तान नेत्राणा सहस्रेण नोदयामास प्रेरयामास। सहस्रग्रहणमास्था-तिशयार्थम् । अनिमषाणामपि प्रयत्नवतामादिन्द्रो न विरुध्यते ॥ २९ ॥

स इति। हरे इन्द्रस्य 'इन्द्रो दुश्च्यवनो हरि' इति

वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम्[१] ॥ ३० ॥
एवं यदात्थ भगवन् आमृष्टं नः परैः पदम्।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो ॥ ३१ ॥
भवल्लब्धवरोदीर्णः[२] तारकाख्यो महासुरः।

ध इत्यर्थः। सहस्रात् नयनेभ्य अधिकं सहस्रनयनाधिकं तद्गोचरदर्शित्वात् इति भावः। हे नेत्रे यस्य तत् द्विनेत्रम्। प्रसिद्धाक्षलक्षणोऽयं विशेष इत्यर्थः। स तत् चक्षुर्नेत। चक्षुष्ट्वारोपस्य प्रकृतोपयोगात् परिणामालङ्कारः। स वाचस्पतिः। कस्कादित्वात् अलुक्सत्वे। 'षष्ठ्या पतिपुत्र' इत्यादिना सत्वमिति स्वामी तत्र छन्दोविषयत्वात्। प्राञ्जलिः सन् जलजासनं ब्रह्माणम् इदम् उवाच ॥ ३० ॥

एवमिति, हे भगवन् षडगुणैश्वर्य्यसम्पन्न! यत् आत्थ 'शातव्यायत्तायः परैः' इति यत् ब्रवीषि। 'ब्रुवः पञ्चानाम्' इत्यादिना आहादेशः, 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा' इति वर्त्तमानप्रयोगः। वामनस्तु भ्रान्तोऽयं प्रयोग इत्याह। आहेति भूते णलन्तभ्रमवदिति। आहेत्युपलक्षणम्। तत् एव सत्यं नः अस्माकं पदम् अधिकारः परैः शत्रुभिः आमृष्टम् आच्छिन्नम्। हे प्रभो! प्रत्येकं प्रतिपुरुषं विनियुक्तात्मा प्रवेशितस्वरूपः सर्व्वान्तर्यामी इत्यर्थः कथं न ज्ञास्यसि न वेत्सि। वर्त्तमानेऽपि वचनभङ्ग्या भविष्यन्निर्देशः प्रसिद्धः, 'अपह्नवे ज्ञः अकर्म्मकाच्च' इत्यात्मनेपदविकल्पः ॥ ३१ ॥

उक्तमेव प्रपञ्चयति, भवल्लब्धेति। भवतः लब्धः लब्धेन वरेण उदीर्णः उद्धतः, तारकः इति आख्या नामधेयं यस्य सः

१ जले जायते यत् तत् जलजं पद्मं तत् आसनं यस्य स तम्।
२ उद् पूर्वात् ईरगतौ गत्यर्थ इधातो कर्त्तरि क्तः।

उपप्लवाय लोकाना धूमकेतुरिवोत्थित ॥ ३२ ॥
पुरे तावन्तमेवास्य१ तनोति रविरातपम् ।
दीर्घिकाकमलोन्मेष यावन्मात्रेण साध्यते ॥ ३३ ॥
सर्व्वाभि सर्व्वदा चन्द्र त कलाभि र्निषेवते ।
नाद्त्ते केवला लेखा हरचूडामणीकृताम् ॥ ३४ ॥
व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।

तारकाख्य महान असुर महासुर 'सन्महत्परमोत्तमोत्कृष्टा पूज्यमाने' इति तत्पुरुष । धूमकेतु उत्पातविशेष इव लोकानाम उपप्लवाय उपद्रवाय उत्थित उत्पन्न ॥ ३२ ॥

पुरे इति । अस्य तारकस्य पुरे रवि सूर्य्य तावन्त तावन्मात्रम् एव आतप तनोति यावन्मात्रेण यावता एव यावती मात्रा मिति यस्य यावन्मात्र तेन वा अल्पपरिमाणेन इत्यर्थ मात्रा परिच्छेदे अल्प च परिमाणे। मात्र कार्त्स्न्येऽव धारणे' इत्यमर । दीर्घिकासु क्रीडावापीषु कमलानाम उन्मेष विकाश साध्यते निष्पाद्यते। कठोरकिरणोऽपि मन्दोष्ण सन्नेव तद्भीत्या पुरे प्रकाशते इत्यभिप्राय ॥ ३३ ॥

सर्व्वाभिरिति। चन्द्र त तारक सर्व्वदा कृष्णपक्षेऽपि इत्यर्थ सर्व्वाभि कलाभि निषेवते 'कला तु षोडशो भाग' इत्यमर । केवला हरचूडामणीकृता शिवशिरोमणीकृता लेखा न आदत्ते न गृह्णाति ॥ ३४ ॥

व्यावृत्तेति। वायु, स्तेनस्य भाव कर्म्म वा स्तेय चौर्य्यम। 'स्तेनाद्यन्नलोपश्च' इति यत्प्रत्यय नलोपश्च। कुसुमाना स्तेय

१ तत परिमाणम अस्येति तावान तम । ततशब्दात् परिमाणे वतुप्प्रत्यय ।

न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥ ३५ ॥
पर्य्यायसेवामुत्सृज्य पुष्पसम्भारतत्परा ।
उद्यानपालसामान्यम् ऋतवस्तमुपासते१ ॥ ३६ ॥
तस्योपायनयोग्यानि रत्नानि सरिता पति ।
कथमप्यम्भसामन्त आनिष्पत्ते प्रतीक्षते ॥ ३७ ॥

तस्मात् स्तेयाभियोगात् दण्डाद्वा साध्वस भय तस्मात् हेतो उद्याने व्यावृत्तगति निवृत्तोद्यानसञ्चार सन इत्यर्थ । सापेक्षत्वेऽपि गमकत्वात् समास । तत्पार्श्वे तत्समीपे तालस्य वृन्ते उदग्रथ्यते तालस्येव वृन्तमस्य इति वा तालवृन्त तस्य अनिलात् व्यजनसञ्चारपवनात् अधिक यथा तथा न वाति 'व्यजन तालवृन्तकम्' इत्यमर ॥ ३५ ॥

पर्य्यायेति। ऋतव षट वसन्तादय पर्य्यायसेवा क्रम सेवाम् उत्सृज्य पुष्पाणा सम्भारे संग्रहे तत्परा आसक्ता सन्त इत्यर्थ 'तत्परे प्रसितासक्तौ' इत्यमर । उद्यानपाले उद्यानाधिकृतै सामान्य साधारण यथा भवति तथा त तारकम् उपासते सेवन्ते। शीतोष्णादिदोषप्रकाशन तु दूरापास्तम इत्यर्थ ॥ ३६ ॥

तस्येति। सरिता पति समुद्र तस्य तारकस्य उपाय नाना प्राभृताना योग्यानि 'प्राभृत तु प्रदेशनम, उपाय नम' इत्यमर । रत्नानि अम्भसाम अन्त आ निष्पत्ते परिपाकपर्य्यन्तम । विकल्पादसमास । कथमपि महता यत्नेन प्रतीक्षते, कदा वा परिपच्येरन्नित्यैकाग्र्येण पालयति इत्यर्थ ॥ ३७ ॥

१ उपपूर्व्वात् आस्धातो वर्त्तमाने प्रथमपुरुषबहुवचनम

ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा१ निशि।
स्थिरप्रदीपतामेत्य२ भुजङ्गा ३ पर्य्युपासते॥ ३८॥
तत्कृतानुग्रहापेक्षी त मुहुर्दूतहारितैः।
अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणैः॥ ३९॥
इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जन॥ ४०॥

ज्वलदिति। किञ्चेति चार्थ। ज्वलन्त्य मणीनां शिरोरत्नाना शिखा ज्वाला येषा ते वासुकिप्रमुखा भुजङ्गा सर्पा सिद्धाश्च ध्वन्यन्ते 'भुजङ्ग सिद्धसर्पयो इत्यमर। निशि स्थिरप्रदीपताम अनिर्वाणदीपत्वम एत्य एन तारक पर्य्युपासते परिवृत्य सेवन्ते॥ ३८॥

ततकृतेति। इन्द्र अपि तेन तारकेण कृत ततकृतम् अनुग्रह प्रसादम अपेक्षते इति तथोक्त सन मुहु दूतहारितै दूतप्रापितै कल्पद्रुमाणा विभूषणै ततप्रसूनै इत्यर्थ त तारकम् अनुकूलयति अनुकूलं करोति॥ ३९॥

इत्थमिति। इत्थम उक्तप्रकारेण रविशशिपवनोदधि भुजङ्गम सुरेन्द्र आराध्यमानोऽपि भुवनत्रय क्लिश्नाति पीडयति। तथाहि, दुर्जन प्रत्यपकारेण प्रतीकारेणैव शाम्येत् शान्तो भवेत् उपकारेण तु न शाम्येत्, प्रत्युत प्रकुप्यति इति भाव॥ ४०॥

---

१ वासुकि प्रमुख प्रधान येष ते।
२ स्थिरप्रदीपता स्थिरा प्रदीपा तेषा भाव ताम।
३ भुजेन वक्रतया गच्छन्ति ये ते भुजङ्गा।

तेनामरवधूहस्तैः सदयालूनपल्लवाः ।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः ॥ ४१ ॥
वीज्यते[1] स हि संसुप्तः श्वाससाधारणानिलैः ।
चामरैः सुरबन्दीनां वाष्पशीकरवर्षिभिः[2] ॥ ४२ ॥
उत्पाट्य मेरुशृङ्गाणि क्षुणानि हरितां खुरैः ।
आक्रीडपर्व्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥ ४३ ॥

तेनेति । तेन तारकेण अमरवधूहस्तैः सुकुमारैः इति भावः, तैरपि सदयम् आलूनाः अवतंसार्थं छिन्नाः पल्लवाः येषां ते नन्दनद्रुमाः छेदाश्च पाताश्च छेदपाताः, तेषाम् अभि जानन्तीति अभिज्ञाः । तद्योगात् कर्म्मणि षष्ठी । क्रियन्ते ॥ ४१ ॥

वीज्यत इति । हि यस्मात् कारणात् सः तारकः संसुप्तः सन् श्वाससाधारणैः निश्वाससमानैः अनिलैः येषां तैः, तत्रो ऽप्याधिक्ये निद्राभङ्गभयात् इति भावः । वाष्पशीकरवर्षिभिः, तासां स्त्रीणां रोदनस्यायमवसरः इति भावः । सुरबन्दीनां सुरप्रग्रहस्त्रीणां सम्बन्धिभिः 'प्रग्रहापग्रहौ बन्द्याम्' इत्यमरः । चामरैः वीज्यते ॥ ४२ ॥

उत्पाट्येति । तेन तारकेण हरितां सूर्य्याश्वानाम् 'हरित् सूर्य्ये च सूर्य्याश्वे वर्णे च हरिते दिशि' इति विश्वः । खुरैः शफैः क्षुणानि चूर्णितानि, एतेन तेषामौन्नत्यं सूचितम् । मेरुशृङ्गाणि उत्पाट्य स्वेषु वेश्मसु । वेश्मस्विति बहुवचनेनास्य

---

१ वीजिधातोः कर्म्मणि वर्त्तमाने प्रथमपुरुषैकवचनम् ।

२ वाष्पाणां शीकरान् वर्षन्ति यानि तानि तैः वाष्पाम्बुकणान् निःसरद्भिः ।

मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम्।
हेमाम्भोरुहशस्यानां[1] तद्वाप्यो धाम साम्प्रतम्॥ ४४॥
भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते।
खिलीभूते विमानानां तदापातभयात् पथि॥ ४५॥
यज्वभिः सम्भृतं हव्यं विततेष्वध्वरेषु[2] सः।

भुवनत्रयनिवासः सूचितः। आक्रीडन्ते एषु इति आक्रीडाः ते च ते पर्व्वताः कल्पिताः कृताः॥ ४३॥

मन्दाकिन्या इति। साम्प्रतं सम्प्रति मन्दाकिन्याः भागीरथ्याः दिग्वारणानां दिग्गजानां मदैः आविलं कलुषं पयः जलम् एव शिष्यते इति शेषः शिष्टम्। कर्म्मणि अण्प्रत्ययः, 'त्रिष्वन्यत्रोपयुज्यते' इति नपुंसकत्वम्। तर्हि कनककमलानि क्व गतानीत्याह, हेमेति। हेमाम्भोरुहाणि एव शस्यानि तेषान्तु तस्य वाप्यः तद्वाप्यः एव धाम स्थानम्। सर्व्वाण्युत्पाट्य स्वदीर्घिकास्वेव प्रतिरोपितवान् इत्यर्थः॥ ४४॥

भुवनेति। तस्य तारकस्य आपातात् समापत्तेः भयात् विमानानां पथि खिलीभूते अप्रहतीभूते सति 'द्वे खिलाप्रहते समे' इत्यमरः। स्वर्गिभिः देवैः भुवनानाम् आलोकने प्रीतिः न अनुभूयते॥ ४५॥

यज्वभिरिति। यज्वभिः विधिवत् इष्टवद्भिः 'यज्वा तु विधिनेष्टवान्' इत्यमरः। 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्-प्रत्ययः। विततेषु अध्वरेषु यज्ञेषु सम्भृतं दत्तं हव्यं हविः मायी मायावी। व्रीह्यादित्वादिनिप्रत्ययः। सः तारकः नः अस्माकं

---

1 अम्भसि रोहन्ति जायन्ते यानि तानि अम्भोरुहाणि। रुह्धातोः कर्त्तरि कः। हेम्नः तु यस्य अम्भोरुहाणि।

2 विततेषु प्रक्रान्तेषु आरब्धेषु।

जातवेदोमुखान्मायी१ मिषतामाच्छिनत्तिर न ॥४६॥
उच्चैरुच्चैःश्रवास्तेन३ हयरत्नमहारि च।
देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः ॥ ४७ ॥
तस्मिन्नुपायाः सर्व्वे नः क्रूरे प्रतिहतक्रियाः।
वीर्य्यवन्त्यौषधानीव विकारे सान्निपातिके ॥ ४८ ॥

मिषतां पश्यतां पश्यत्सु सत्सु इत्यर्थः। 'षष्ठी चानादरे' इति षष्ठी। जातवेदा वह्निः एव मुखं तस्मात् जातवेदोमुखात् आच्छिनत्ति आक्षिप्य गृह्णाति इत्यर्थः ॥ ४६ ॥

उच्चैरिति। किञ्चेति चार्थः। तेन तारकेण उच्चैः उन्नतः उच्चैःश्रवा नाम हयः रत्नमिव हयरत्नम् अश्वश्रेष्ठः 'रत्नं श्रेष्ठे मणावपि' इति विश्वः। अस्य शुभ्रत्वादुत्प्रेक्ष्यते, देहबद्धं बद्धदेहं मूर्त्तिमत् इत्यर्थः। आहिताग्न्यादित्वान्निष्ठायाः परनिपातः। चिरकालार्ज्जितम् इन्द्रस्य यश इव अहारि अपहृतम् ॥ ४७ ॥

तर्हि सामाद्युपायास्तत्र कथं न प्रयुक्ता इत्यत्राह, तस्मिन्निति। क्रूरे घातुके। 'नृशंसो घातुकः क्रूरः' इत्यमरः। तस्मिन् असुरे नः अस्माकं सर्व्वे उपायाः, सन्निपातदोषत्रयस्य प्रकोपजे सान्निपातिके विकारे ज्वरादौ 'सन्निपाताच्च' इति वक्तव्याट्ठक्। वीर्य्यवन्ति सारवन्ति औषधानि इव, प्रतिहतक्रियाः विफलप्रयोगाः भवन्ति ॥ ४८ ॥

---

१ जाता वेदा यस्मात् स जातवेदाः।

२ मिषतां अभिलाषं पश्यतामित्यर्थः।

३ उच्चैः श्रवा कर्णौ उन्नते श्रवसी कर्णौ यस्य सः। श्रवस् इति श्रु धातोः करणे असुन्।

जयाशा यत्र चास्माकं प्रतिघातोत्थितार्च्चिषा।
हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम्१ ॥४९॥
तदीयास्तोयदेष्वद्य२ पुष्करावर्त्तकादिषु।
अभ्यस्यन्ति३ तटाघातं निर्जितैरावता४ गजाः ॥५०॥
तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये।

तदेव प्रतिहतक्रियत्वमाह, जयेति। किञ्च इति चार्थे। नूनम् अनेन हरिचक्रेण वयं जेष्याम इति यत्र हरिचक्रे अस्माकं जयाशा विजयाशंसा आसीत् इति शेषः। प्रतिघातेन प्रतिहत्या उत्थितार्च्चिषा उद्गततेजसा तेन हरिचक्रेण विष्णोः सुदर्शनेन अस्य तारकस्य कण्ठे निष्कम् उरोभूषणम् अर्पितम् इव इत्युत्प्रेक्षा स्वयमेव निष्कमिव स्थितम् इत्यर्थः। तारकशिरश्छेदाय हरिणा चक्रं त्यक्तं तदपि नष्टशक्ति जातम् इति भावः। 'साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले। दीनारेऽपि च निष्कोऽस्त्री॥' इत्यमरः॥४९॥

तदीया इति। अद्य मथनं निर्जित ऐरावतः यैः ते तथोक्ताः तस्य तारकस्य इमे तदीयाः गजाः, पुष्करास्च आवर्त्तकाश्च नाम आदयः येषां तेषु तोयदेषु मेघेषु तटाघातं वप्रक्रीडाम् अभ्यस्यन्ति॥५०॥

तदिति। तत् तस्मात् कारणात् हे विभो स्वामिन्। मोक्तुं भवं त्यक्तुम् इच्छव मुमुक्षवः विरक्ताः भवस्य संसारस्य शान्तये

१ ऋधातोर्य्यन्तात् कर्म्मणि क्तः।

२ तोयं जलं ददति ये ते तोयदाः तेषु। तोयशब्दपूर्व्वात् दाधातोः कर्त्तरि डः।

३ पुनः पुनः कुर्व्वन्ति।

४ इरा जलं विद्यते यस्य सः इरावान् तस्मात् जातः ऐरावतः।

कर्म्मबन्धच्छिद धर्म्म भवस्येव मुमुक्षव ॥ ५१ ॥
गोप्तार सुरसैन्याना य पुरस्कृत्य गोत्रभित्।
प्रत्यानेष्यति शत्रुभ्य वन्दीमिव जयश्रियम् ॥ ५२ ॥
वचस्यवसिते तस्मिन् ससर्ज गिरमात्मभूः।
गर्जितानन्तर वृष्टि सौभाग्येन जिगाय सा ॥ ५३ ॥
सम्पत्स्यते व कामोऽय काल कश्चित् प्रतीक्ष्यताम्।

निवृत्तये कर्म्म एव बन्ध त छिनत्ति इति कर्म्मबन्धच्छित् त धर्म्मम इव आत्मज्ञानहेतुभूतम् इति शेष। 'तमेव विदित्वाति मृत्युमेति' इति ज्ञानादेव मुक्ति। तस्य ताकरस्य शान्तये नाशाय, सेना नयतीति सेनानी चमूपति 'सत्सूद्विष इत्या दिना क्विप्। त सेनान्य कश्चित् स्रष्टुम इच्छाम वयम् इति शेष ।५१

सेनानीस्रष्टे फलमाह, गोप्तारमिति। सुरसैन्याना देवता सेनाना गोप्तार रक्षितार य सेनान्य परस्कृत्य पुरोधाय 'पुरो ऽव्ययम्' इति गतित्वात् 'नमस्पुरसोर्गत्यो' इति सकार। गा पृथ्वी चायन्ते इति गोत्रा तान् भिनत्ति इति गोत्रभित् इ॰ जयश्रिय वन्दीमिव वन्दीकृता स्त्रियमिव शत्रुभ्य सकाशात् प्रत्यानेष्यति प्रत्याहरिष्यति त स्रष्टुमिति पूर्व्वेण सम्बन्ध ॥५२॥

वचसीति। तस्मिन वार्हस्पत्ये वचसि अवसिते परिसमाप्ते सति आत्मभू ब्रह्मा गिर वाच ससर्ज जगाद इत्यर्थ। सा गी सौभाग्येन मनोहरत्वेन 'हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य च' इति उभयपदवृद्धि। गर्जितात् गर्ज्जितस्य वा अनन्तर प्रवृत्ता वृष्टि जिगाय जितवती। गर्ज्जितपरत्वाद् वृष्टेरिव तद्विज्ञापनफल-त्वाद् गिरः सुभगत्वम इति भाव ॥ ५३ ॥

सम्पत्स्यते इति। अय व युष्माक काम मनोरथ सेनानीरूप सम्पत्स्यते सेत्स्यति, कश्चित् कियानपि काल प्रतीक्ष्यताम।

नत्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मना ॥ ५४ ॥
इत स दैत्य प्राप्तश्री नेत एवार्हति चयम् ।
विषवृक्षोऽपि सवर्द्ध्य स्वय छेत्तुमसाम्प्रतम् ॥ ५५ ॥
वृत तेनेदमेव प्राक् मया चास्मै प्रतिश्रुतम् ।
वरेण शमित१ लोकान अल दग्धु हि तत्तप ॥५६ ॥
संयुगे सायुगीन तम् उद्यन्त प्रसहेत क ।

तु किन्तु अस्य सेनान्य सिद्धौ विषये आत्मना स्वय सर्ग सृष्टि-रेव व्यापार त न यास्यामि नाह स्रक्ष्यामि इत्यर्थ ॥ ५४ ॥

कुत इत्याशङ्काह, इत इति । इत मत्त एव प्राप्तश्री लब्धोदय स दैत्य तरकासुर इत मत्त एव चय नाश न अर्हति । तथाहि, अन्यो वृत्तम्तावदास्ता विषस्य वृक्ष विषवृक्षोऽपि मवर्ड्धा कुतश्चित कारणात् सम्यक् वर्द्धयित्वा स्वय छेत्तु हन्तुम् असाम्प्रतम अनर्ह । असाम्प्रतमित्यनेन निपा-तेनाभिहितत्वात् वृक्ष इति द्वितीयान्तो न भवति अनभिहिते कर्म्मणि द्वितीयाभिधानात्। यथाह वामन 'निपातेनाप्यभि हिते कर्म्मणि न विभक्ति परिगणनस्य प्रायिकत्वात' इति ॥५५॥

वृतमिति । प्राक पूर्व्व तेन असुरेण इदम् एव देवै अवध्यत्वम् एव वृत प्रार्थितम्, मया च अस्मै तारकाय प्रतिश्रुत प्रतिज्ञातम् । प्रत्याङ्भ्या श्रुव पूर्व्वस्य कर्त्ता' इति सम्प्रदान त्वाच्चतुर्थी । कर्त्तव्यञ्चैतदित्याह, लोकान दग्धुम् अल शक्तम् । 'पर्य्याप्तिवचनेष्वलमर्थेषु इति तुमुनप्रत्यय । तस्य तप तत्तप वरेण वरदानेन शमित हि मया इति शेष ॥ ५६ ॥

सयुगे युद्धे उद्यन्त व्याप्रियमाण सयुगे साधु सायुगीनम् ।

---

१ शान्ति गमितम् ।

अशाहते निषिक्तस्य नीललोहितरेतस ॥ ५७ ॥
स हि देव पर ज्योति. तमःपारे व्यवस्थितम्।
परिच्छिन्नप्रभावर्द्धिर्न१ मया न च विष्णुना२ ॥ ५८ ॥
उमारूपेण ते यूय संयमस्तिमित मन ।
शम्भोर्यतध्वमाक्रष्टुम् अयस्कान्तेन लौहवत् ॥ ५९ ॥

'प्रतिजनादिभ्य खञ् इति खञ्प्रत्यय । त तारक निषिक्तस्य क्वचित् क्षेत्रे चारितस्य। नील कण्ठे लोहितश्च केशेष्विति नीललोहित इति पुराणमिति स्वामी। तस्य नीललोहितस्य धूर्जटे, रेतस शुक्रस्य अशात् ऋते अश विना अन्य क प्रसहेत अभिभवेत् 'प्रसहनमभिभव इति वृत्तिकार ॥ ५७ ॥

कथमसावीदृक्शक्तिरित्याह, स इति। स देव नील-लोहित तमस पारे परत व्यवस्थित तमोगुणातीत पर ज्योति परमात्मा हि अत एव मया परिच्छिन्नप्रभावर्द्धि अवगाढ महिमातिशय न भवति तथा विष्णुना च न, अतस्तस्यासाध्य नास्ति इत्यर्थ ॥ ५८ ॥

सम्प्रति तदंशोत्पत्तावुपाय दर्शयति, उमेति। ते कार्य्या-र्थिन यूय संयमस्तिमित समाधिनिश्चल शम्भो मन उमारूपेण उमासौन्दर्य्येण 'रूप स्वभावे सौन्दर्य्ये नाणके पशुशब्दयो। ग्रन्थावृत्तौ नाटकादौ आकारश्लोकयोरपि॥' इति विश्व। अय-स्कान्तेन मणिविशेषेण 'कस्कादिषु च इति सकार। लौहवत् अयोधातुमिव 'तेन तुल्य क्रिया चेद्वति' इति वतिप्रत्ययो मृग्य। आक्रष्टुम आहर्तु यतध्वम उद्युक्ता भवत॥ ५९ ॥

---

१ परिच्छिन्ना इयत्तया परिमिता प्रभाव एव प्रभावस्य वा ऋद्धि सम्पत्ति यस्य स।

२ वेवेष्टि व्याप्नोति विश्वमिति शेष यः स विष्णु तेन।

उभे एव क्षमे वोढुम् उभयोर्वीजमाहितम् ।
सा वा शम्भोस्तदीया वा मूर्त्तिर्जलमयी१ मम ॥ ६० ॥
तस्यात्मा शितिकण्ठस्य२ सैनापत्यमुपेत्य व ।
मोच्यते सुरवन्दीनां वेणीर्वीर्य्यविभूतिभि ॥ ६१ ॥
इति व्याहृत्य विबुधान् विश्वयोनिस्तिरोदधे ।

न च गत्यन्तरमस्तीत्याह, उभे इति । उभयो शम्भो मम च आहित निषिक्त वीज तेज वोढु सोढु सा उमा वा शम्भो अष्टमूर्त्ते तस्य इय तदीया जलमयी मूर्त्तिर्वा मम । उभे एव क्षमे न तृतीया इत्यर्थ । वाशब्दो द्वन्द्वार्थे नत्वन्यार्थे । एतदेवो-दाहृत्य इत्थमेव व्याख्यात गणव्याख्याने । अत्र दीपकालङ्कार प्राकरणिकयोरुमामहेश्वरयोरप्राकरणिकयोर्ब्रह्मजलमूर्त्त्योश्च औप-म्यस्य गम्यत्वात् । यथाह भोजराज , 'प्रस्तुतानामप्रस्तुतानाञ्चौ-पम्यस्य गम्यत्वे दीपकम्' इति । न चेय तुल्ययोगिता तस्या केवलप्रस्तुतविषयत्वेन केवलाप्रस्तुतविषयत्वेन चोत्थानादिति ॥ ६०

तस्येति । तस्य शितिकण्ठस्य अष्टमूर्त्ते आत्मा पुत्र इत्यर्थ 'आत्मा वै पुत्रनामासि' इति श्रुते । व युष्माक सेना पतेर्भाव सैनापत्यम् । 'पत्यन्तपुरोहितादिभ्यो यक्' इति यक्प्रत्यय । उपेत्य प्राप्य वीर्य्यविभूतिभि शौर्य्यसम्पत्तिभि सुरवन्दीनां वेणी मोच्यते विस्रसयिष्यति तारकासुर हनि ष्यति इति भाव ॥ ६१ ॥

इतीति । विश्वस्य योनि कारणम् । 'योनि स्त्रीणा स्थान-भेदे कारणे ताम्रिकेपणे' इति वैजयन्ती । विबुधान् सुरान् इति व्याहृत्य अभिधाय तिरोदधे अन्तर्हितवान । ते देवा अपि

१ जल स्वरूपमस्या इति जलमयी ।

२ शिति कण्ठ यस्य स तस्य नीलकण्ठस्य शिवस्य ।

मनस्याहितकर्त्तव्या तेऽपि देवा दिवं ययुः ॥ ६२ ॥
तत्र निश्चित्य कन्दर्पम् अगमत् पाकशासनः ।
मनसा कार्य्यसंसिद्धि-त्वराद्विगुणरंहसा ॥ ६३ ॥
अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।

मनसि आहितं कर्त्तव्यं यैः ते यथोक्ताः सन्तः दिवं स्वर्गं ययुः प्रापुः ॥ ६२ ॥

तत्रेति । पाकः नाम कश्चित् असुरः तस्य शासनः इन्द्रः तत्र हरचित्ताकर्षणकृत्ये कन्दर्पं निश्चित्य साधकत्वेन इति शेषः कार्य्यसंसिद्धौ त्वरया औत्सुक्येन द्वौ गुणौ यस्य तत् द्विगुणं द्विरावृत्तं रंहः वेगः यस्य तेन तथोक्तेन 'गुणस्त्वावृत्ति शब्दादिज्येन्द्रियामुख्यजन्तुषु' इति वैजयन्ती । मनसा अगमत् सस्मार इत्यर्थः । गमेर्लुङ् लृदित्त्वात् च्लेरङादेशः ॥ ६३ ॥

अथेति । अथ स्मरणानन्तरं सः स्मृत इत्यर्थः, पुष्पं धनुः यस्य सः पुष्पधन्वा कामः 'वा संज्ञायाम्' इति अनङ् । 'ललितं त्रिषु सुन्दरम्' इत्यमरः । ललितायाः सुन्दर्य्याः योषितः भ्रुवौ लते इव चारुणी शृङ्गे कोटी यस्य तत् तथोक्तं चापं, रतिः स्मरप्रिया 'रतिः स्मरप्रियायाम्' इत्यमरः । तस्याः वलयपदानि कङ्कणस्थानानि अङ्कः चिह्नं यस्य सः तथोक्ते कण्ठे आसज्य लगयित्वा, चापकण्ठविशेषणाभ्यां शृङ्गारैकनिधेः त्रिभुवनैकवीरस्य शृङ्गारवीरोपकरणेषु तुल्यरसत्वं व्यज्यते । सहचरस्य सख्युः मधोः वसन्तस्य हस्ते न्यस्तः चूताङ्कुरः एव अस्त्रं यस्य सः तथोक्तः प्राञ्जलिः कृताञ्जलिः सन् शतमखम् इन्द्रम् उपतस्थे सङ्गतवान् । सङ्गतिकरणार्थादात्मनेपदम् । अत्र स्वभावोक्तिः, 'स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनम्' इति ।

सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्र·
शतमखमुपतस्थे प्राञ्जलि.१ पुष्पधन्वा ॥ ६४॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
ब्रह्माभिगमनो नाम द्वितीय सर्ग.।

मालिनीवृत्तमेतत् 'न न म-य-य युतेय मालिनी भोगिलोक
इति तल्लक्षणात् ॥ ६४ ॥

इति श्रीमन्महामहोपाध्याय कोलाचलमल्लिनाथ-सूरि'विरचिताया
कुमारसम्भवव्याख्याया सञ्जीवनीसमाख्याया द्वितीय सर्ग ।

---

१ प्रबद्ध अञ्जलि येन स । मध्यपदलोपी समास ।

## तृतीयः सर्गः ।

तस्मिन् मघोनस्त्रिदशान् विहाय
सहस्रमक्ष्णां युगपत् पपात ।
प्रयोजनापेक्षितया[1] प्रभूणां
प्रायश्चलं गौरवमाश्रितेषु ॥ १ ॥
स वासवेनासनसन्निकृष्टम्
इतो निषीदेति विसृष्टभूमिः[2] ।

तस्मिन्निति । मघोन इन्द्रस्य अक्ष्णां सहस्रं त्रिरावृत्ता दश परिमाणम एषाम् इति त्रिदशान देवान 'सङ्ख्ययाव्यया-सन्नादूराधिकसङ्ख्याः सङ्ख्येये' इति बहुव्रीहिः । बहुव्रीहौ सङ्ख्येये इति डच्प्रत्ययः । उक्तार्थत्वात सुचो निवृत्तिः । विहाय [illegible]
चीदित्यादरातिशयोक्तिः । ननु सुचिरपरिचितानेकसुरपरित्यागेन भगवतो महेन्द्रस्य कथमकाण्डे तस्मिन्नेकस्मिन् पक्षपात इत्याशङ्कयार्थान्तरं न्यस्यति । प्रायः भूम्ना प्रभूणाम आश्रितेषु सेवकेषु विषये गौरवम् आदरः प्रयोजनापेक्षितया कार्य्यार्थित्वेन हेतुना चलं चञ्चलम् । फलतन्त्राः प्रभवो न तु गुणतन्त्रा इति भावः ॥ १ ॥

स इति । स कामः वासवेन इन्द्रेण आसनस्य सिंहासनस्य

---

[1] प्रयोजनम् अपेक्षन्ते ये ते प्रयोजनापेक्षिणः तेषां भावः प्रयोजनापेक्षिता तया ।

[2] विसृष्टा दत्ता भूमिः अवकाशः यस्मै सः ।

भर्त्तुः प्रसादं प्रतिनन्द्य मूर्द्ध्ना
　वक्तुं मिथः प्राक्रमतैवमेनम् ॥ २ ॥
आज्ञापय ज्ञातविशेष पुंसां
　लोकेषु यत् ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तम्
　इच्छामि संवर्द्धितमाज्ञया ते ॥ ३ ॥

सन्निकृष्टं सन्निहितम् आसनसन्निकृष्टं यथा तथा शेषषष्ठ्याः समासः, 'क्वयोगलक्षणया तु नलोकाव्ययनिष्ठाखलर्थटणाम्' इति षष्ठीनिषेधात। इतः निषीद इह उपविश इति निर्दृष्टां भूमिं दत्तावकाशः सन भर्त्तुः स्वामिनः प्रसादम् अनुग्रहं मूर्द्ध्ना प्रतिनन्द्य सम्भाव्य मिथः रहसि 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः। एनम् इन्द्रम् एवं वक्ष्यमाणप्रकारेण वक्तुं प्राक्रमत उपक्रान्तवान 'प्रोपाभ्यां समर्थाभ्याम्' इति आत्मनेपदम् ॥ २ ॥

आज्ञापयेति। हे पुंसां ज्ञातविशेष। ज्ञातसार। ज्ञातपुंविशेष इत्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। आज्ञापय तत् इति शेषः। उत्तरवाक्ये यच्छब्दप्रयोगान्न पूर्व्ववाक्ये तच्छब्दप्रयोगनिर्बन्धः। किं तदित्याह, लोकेषु ते तव यत् करणीयं कर्त्तव्यम् अस्ति, संस्मरणेन प्रवृत्तम् उत्पन्नं ते तव अनुग्रहं प्रसादम् आज्ञया नियोगेन संवर्द्धितं वृद्धिं गमितम् इच्छामि, सम्मरणकृतमनुग्रहं केनचिन्नियोगेन वर्द्धय कस्मिंश्चित् कर्म्मणि नियुङ्क्ष्व इत्यर्थः अन्यथा मे नास्ति परितोष इति भावः। तुमुन्नन्तपाठे णिजर्थे यत्न कार्य्यः ॥ ३ ॥

केनाभ्यसूया पदकाङ्क्षिणा१ ते
नितान्तदीर्घैर्जनिता तपोभि ।
यावद्भवत्याहितसायकस्य२
मत्कार्म्मुकस्यास्य३ निदेशवर्त्ती ॥ ४ ॥
असम्मत कस्तव मुक्तिमार्ग४
पुनर्भवक्लेशभयात् प्रपन्न ।
बद्धश्चिरं तिष्ठतु सुन्दरीणाम्
आरेचितभ्रूचतुरै कटाक्षै५ ॥ ५ ॥

न च मे किञ्चिदसाध्यमस्तीत्याह, केनेति। पदकाङ्क्षिणा स्वाराज्यकामेन केन पुसा नितान्तदीर्घै अतिप्रभूतै तपोभि ते तव अभ्यसूया ईर्ष्या जनिता त ब्रूहि इति शेष । किमर्थं यावत् यत स भवद्वैरी आहितसायकस्य सहितबाणस्य अस्य मत्कार्म्मुकस्य निदशे वर्त्तते इति निदेशवर्त्ती आज्ञावश भवति अविलम्बेनैव भविष्यति इत्यर्थ । 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा' इति लट् ॥ ४ ॥

सम्प्रति चतुर्वर्गे मोक्षमधिकृत्याह असम्मत इति। तव असम्मत क पुनर्भव पुनरुत्पत्ति ससार इति यावत् तत्र य क्लेशा जन्मजरामरणादय तेभ्य भयात् मुक्तिमार्गं प्रपन्न त वद। यत स अपि आरेचिताभि एकैकश विवर्त्तिताभि

१ पद इन्द्रत्वम इत्यथ काङ्क्षति कामयते य स पदकाङ्क्षी तेन ।

२ आहित सायक यस्मिन् तत् तस्य ।

३ कर्म्मणे प्रभवति इति कार्म्मुकम् तस्य । कर्म्मण उकञ् ।

४ मुक्तेः मार्ग मुक्तिमार्ग त मोक्षपदम् ।

५ अपाङ्गवीक्षितै ।

अध्यापितस्योशनसापि१ नीति
　प्रयुक्तरागप्रणिधिर्द्विषस्ते।
कस्यार्थधर्म्मौ वद पीडयामि
　सिन्धोस्तटावोघ इव प्रवृद्ध.॥ ६ ॥
कामेकपत्नीव्रतदुःखशीला
　लोलं मनश्चारुतया प्रविष्टाम्।

भ्रूभि चतुरे सुन्दरीणा कटाक्षे बद्ध चिर तिष्ठतु। आरे- चितलक्षण तु, 'स्यादं भ्रवोर्लीलतात्क्षेपात् एकस्या एव रचितम्। तयोर्मूलमसुत्क्षेप कौटिल्याद् भ्रुकुटि विदु ॥' इति ॥ ५ ॥

धर्मार्थावधिकृत्याह, अध्यापितस्येति। उशनसा शुक्रेण नीति नीतिशास्त्रम् अध्यापितस्यापि। अपिशब्दाच्छक्रशिष्या- णामप्रहृष्यत्व गम्यते, 'गतिबुद्धि इत्यादिना द्विकर्म्मकादि- ङ्धातोर्ण्यन्तात प्रधाने कर्म्मणि क्त, अप्रधाने दुहादीना ण्यन्ते कर्तुश्च कर्म्मण' इति वचनात्। ते द्विष तव शत्रो कस्य अर्थधर्म्मौ प्रयुक्त प्रहित राग विषयाभिलाष एव प्रणिधि दूत येन स अहम्। प्रणिधि प्रार्थने चरे' इति यादव। प्रवृद्ध ओघ प्रवाह सिन्धो नद्या तटौ इव पीडयामि, वद ॥ ६ ॥

काममधिकृत्याह, कामिति। एक पति यस्या सा एक पत्नी पतिव्रता। 'नित्य सपत्न्यादिषु' इति ङीप। तस्या व्रत पातिव्रत्य तेन दुःखशीला दुःखस्वभावा दृढव्रताम इत्यर्थ शील स्वभावे सद्वृत्ते' इत्यमर। चारुतया सुन्दरीत्वेन हेतुना लोल मन तच्चित्त प्रविष्टा का नितम्बिनी नारीं मकलज्जा

१ अध्यापित। अधि इङल अध्ययने इति अधिपूर्व्वात् इधातो णिजन्तात कर्म्मणि क्त। तस्य।

नितम्बिनीमिच्छसि मुक्तलज्जा
कण्ठे स्वयंग्राहनिषक्तबाहुम्[१] ॥ ७ ॥
कयासि कामिन् सुरतापराधात्
पादानतः कोपनयावधूतः ।
तस्याः करिष्यामि दृढानुतापं
प्रवालशय्याशरणं[२] शरीरम् ॥ ८ ॥
प्रसीद विश्राम्यतु[३] वीर वज्रं
शरैर्मदीयैः कतमः सुरारिः ।

सती कण्ठे स्वयंग्राहनिषक्तबाहुं स्वयं गृह्णाति इति स्वयंग्राहः। 'विभाषा ग्रहः' इति णप्रत्ययः। न च जलचर एव ग्राह इति नियमः 'जलचरे ग्राह एव' इति नियमादिति। स्वयंग्राहा च सा निषक्तबाहुश्च तां तथाभूताम् इच्छसि, त्वदर्थं पतिव्रता अपि व्रताद् भ्रंशयिष्यामि इत्यर्थः। एतच्चेन्द्रस्य पारदारिकत्वादुक्तम्। तथा च श्रुतिः, 'अहल्यायै जार' इति ॥ ७ ॥

त्रिविधा नायिका स्वीया परकीया साधारणी चेति तत्र परकीया प्रत्युक्तम् इतरे प्रत्याह, कयेति। हे कामिन् कामुक सुरतापराधात् अन्यासङ्गात् इत्यर्थः पादानतः प्रणतः सन् कोपनया कोपनशीलया कया स्त्रिया अवधूतः तिरस्कृतः असि? तस्याः शरीरं दृढानुतापं गाढपश्चात्तापम् अत एव प्रवालशय्याशरणं करिष्यामि इति ॥ ८ ॥

प्रसीदेति। हे वीर! प्रसीद प्रसन्नः भव, वज्रं कुलिशं

---

१ अथवा ग्राह इति भावे घञ्। स्वयम् आत्मना ग्राहेण ग्रहणेन निषक्तौ कण्ठमारोपितौ तव इति शेषः बाहू यया सा तथोक्ता ताम्।

२ प्रवालानां पल्लवानां शय्या सा एव शरणम् आश्रयः यस्य तत्।

३ विश्रामं लभताम्।

विभेतु मोघीकृतबाहुवीर्य्य १
स्त्रीभ्योऽपि कोपस्फुरिताधराभ्य. ॥ ९ ॥
तव प्रसादात् कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्धा।
कुर्य्यां हरस्यापि पिनाकपाणे
धैर्य्यच्युतिं के मम धन्विनोऽन्येर ॥ १० ॥

विश्राम्यतु उदास्ताम इत्यर्थ । मदीये शरे मोघीकृतबाहु वीर्य्य विफलीकृतभुजशक्ति कतम दैत्यदानवादिषु य कश्चन सुरारि 'वा बहूना जातिपरिप्रश्ने डतमच्' इति डतमच् प्रत्यय । कोपेन स्फुरिताधराभ्य स्त्रीभ्य अपि बिभेतु किमु वक्तव्य पुभ्य इत्यर्थ, सकम्पीत सर्व्वतो बिभेति इति भाव । 'भीत्रार्थाना भयहेतु' इति अपादानत्वात पञ्चमी ॥ ९ ॥

तवेति। कि बहुना तव प्रसादात् अनुग्रहात् कुसुमायुध अपि अतिदुर्व्वलास्त्र अपि अहम् एक मधु वसन्तम् एव सहाय लब्धा पिनाक पाणौ यस्य स पिनाकपाणि । 'प्रह-रणार्थेभ्य परे निष्ठासप्तम्यौ'। तस्य हरस्यापि, हर पिनाकी चेत्यतिदारुण इति भाव, धैर्य्यच्युति धैर्य्यहानि कुर्य्यां कर्त्तुं शक्नुयाम् इत्यर्थ 'शकि लिङ् च' इति शक्यार्थे लिङ्। अन्ये धन्विन धनुर्भृत मम के? न केऽपि इत्यर्थ । किशब्द कुत्सायाम्, 'कुत्साप्रश्नवितर्केषु किशब्द इष्यते' इति शाश्वत ॥ १० ॥

---

१ न मोघ मोघ कृत बाहुवीर्य्य यस्य स ।

२ धन्व विद्यते येषां ते । अस्त्यर्थे इन् ।

अथोरुदेशादवतार्य्य१ पादम्
आक्रान्तिसम्भावितपादपीठम्।
सङ्कल्पितार्थे विवृतात्मशक्तिम् २
आखण्डलः काममिदं बभाषे ॥ ११ ॥

सर्व्वं सखे त्वय्युपपन्नमेतत्
उभे ममास्त्रे कुलिशं भवांश्च।
वज्रं तपोवीर्य्यमहत्सु३ कुण्ठं
त्वं सर्व्वतोगामि च साधकञ्च ॥ १२ ॥

अथेति। अथ स्मरवाक्यश्रवणानन्तरम् आखण्डलः महेन्द्रः ऊरुदेशात् पादम् आक्रान्त्या आक्रमणेन सम्भावित पादपीठं यस्मिन् तत् यथा तथा अवतार्य्य सङ्कल्पितार्थे हर-चित्ताकर्षणरूपे विषये विवृतात्मशक्तिं कुर्व्वा हरस्यापि इत्या-दिना प्रकटीकृतस्वसामर्थ्यं कामं स्मरम् इदं वक्ष्यमाणं बभाषे ॥ ११ ॥

सर्व्वमिति। हे सखे। सखे इति सम्बोधनं गौरवार्थम्। सर्व्वम् एतत् त्वयि उपपन्नं सिद्धं, मम कुलिशं वज्रं भवान् च उभे अस्त्रे तत्र वज्रं तपोवीर्य्येण तपोबलेन महत्सु प्रबलेषु कुण्ठं प्रतिबद्धप्रसरं, त्वम् अस्त्रं सर्व्वतोगामि च साधकं च तापसेष्वप्यकुण्ठम् इत्यर्थः ॥ १२ ॥

---

१ अवतार्य्य अवनमय्य।

२ विवृता आत्मशक्तिः येन स तम्।

३ तपसः तपः एव वा बलं तेन महान्तः तेषु।

अवैमि ते सारमत खलु त्वा
कार्य्ये गुरुण्यात्मसम नियोक्ष्ये१ ।
व्यादिश्यते भूधरतामवेक्ष्य
कृष्णेन देहोद्वहनाय शेष. ॥ १३ ॥
आशंसता बाणगतिं वृषाङ्के
कार्य्यं त्वया न प्रतिपन्नकल्पमर ।

अवैमीति। हे सखे। ते सार बलम् अवैमि वेद्मि, अत खलु अत एव आत्मसम मत्तुल्य त्वा गरुणि महति कार्य्ये तस्मे हिमाद्रेरिति वक्ष्यमाणे नियोक्ष्ये 'स्वराद्यन्तोपसृष्टादिति वक्तव्यम्' इति वार्त्तिकादात्मनेपदनियम। तथाहि, सार-परीक्षापूर्ब्बक एव सर्व्वत्र नियोग इत्याह, कृष्णेन विष्णुना धरतीति धर। पचाद्यच्। भुव धर भूधर तस्य भाव तत्ता भूधरता भूधरणशक्तिम् इत्यर्थ अवेक्ष्य ज्ञात्वा शेष सर्पराज देहोद्वहनाय स्वदेहम उद्वोढुम् 'क्रियार्थोपपदस्य' इत्यादिना चतुर्थी। व्यादिश्यते नियुज्यते। शेषशायी हि भगवान॥ १३ ॥

नियोगाङ्गीकार विद्धवत कर्त्तुमाह, आशसतेति। वृषाङ्के हरे बाणगति बाणप्रसरं आशसता कथयता कुर्य्या हरस्यापि पिणाकपाणे इत्यादिना इति शेष त्वया न अस्माक कार्य्य प्रतिपन्नकल्पम अङ्गीकृतप्रायम्। ईषदसमाप्तौ कल्पप्प्रत्यय। कथमेतदत आह, इदानीम उच्चे उन्नता द्विष येषा तेषाम् उच्चैर्द्विषा यज्ञांशभुजा देवानाम्, एतेन द्विषद्दुःखयज्ञभागत्व सूच्यते। ईप्सितम् आप्तुमिष्टम् एतत् एव हर बाणप्रयोग

१ नियुक्त करिष्यामि।

२ ईषदून प्रतिपन्नम्।

निबोध यज्ञांशभुजामिदानीम्[१]
उच्चैर्द्विषामीप्सितमेतदेव ॥ १४ ॥
अमी हि वीर्य्यप्रभवं[२] भवस्य
जयाय सेनान्यमुशन्ति देवा ।
स च त्वदेकेषुनिपातसाध्यः[३]
ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥ १५ ॥

रूपस् एव निबोध हरायत्त बुध्यस्व इत्यर्थ । बुधबोधने इति धातोर्लोट्। अत्राशसता प्रार्थ्यमानेनेति नाथव्याख्यानमनाथ व्याख्यानम् आङ्पूर्व्वयो शास्तिशसत्योरिच्छार्थत्वे आत्मनेपद-नियमात्। याचनार्थत्वस्याप्रामाणिकत्वात् कुर्य्या हरस्यापो-व्यत्वानयोरभावादयोगाच्चेति ॥ १४ ॥

किं तत् कार्य्यं कथं वा तस्य हरायत्तत्वं कुतो वा मद-पचेत्यत्राह, अमी इति। हि यस्मात् अमी देवा जयाय शत्रुजयार्थं भवस्य हरस्य वीर्य्यप्रभवं तेजःसम्भूतं सेनान्यं सेना पतिम् उशन्ति कामयन्ते। वशकान्ताविति धातोर्लट्। ब्रह्मणा सद्योजातादिमन्त्राणाम् अङ्गानां हृदयादिमन्त्राणां भूः स्थानं ब्रह्माङ्गभूः कृतमन्त्रन्यास इत्यर्थः। ब्रह्मणि निजतत्त्वे। 'वेद स्तत्त्व तपो ब्रह्म' इत्यभयत्राप्यमरः। योजितात्मा निय मितचित्तः मन्त्रन्यासपूर्व्वकं ब्रह्म ध्यायन् इत्यर्थः। स भवस्य

---

१ यज्ञांशभुजां यज्ञस्य अंशं भुञ्जते ये ते तेषां यज्ञभागभुजाम्। भुज धातो कर्त्तरि क्विप। ईप्सितम्। आप्धातो सन्नन्तात् कर्म्मणि क्त ।

२ वीर्य्यात् वीर्य्यं वा प्रभव यस्य स तम्। प्रथमे प्रभा इति भावे अल् प्रभव उत्पत्ति । द्वितीये अपादाने अल् प्रभव कारणम् ।

३ साध्य विकारं प्रापयितुं शक्य इत्यर्थ ।

तस्मै हिमाद्रेः प्रयतां तनूजां
यतात्मने रोचयितुं यतस्व ।
योषित्सु तद्वीर्य्यनिषेकभूमिः
सैव क्षमेत्यात्मभुवोपदिष्टम् ॥ १६ ॥
गुरोर्नियोगाच्च नगेन्द्रकन्या
स्थाणुं तपस्यन्तमधित्यकायाम् ।
अन्वास्ते[१] इत्यप्सरसां मुखेभ्यः
श्रुतं मया मत्प्रणिधिः स वर्गः ॥ १७ ॥

त्वदेकेषो तव एकबाणस्य निपातेन साध्य अनन्यसाध्यो-ऽयमस्मिन्नवसर इति भाव ॥ १५ ॥

तस्मा इति । यतात्मने नियतचित्ताय तस्मै भवाय 'रुच्यर्थाना प्रीयमाण ' इति सम्प्रदानत्वाच्चतुर्थी । प्रयता हिमाद्रेः तनूजा पार्व्वती रोचयितु यतस्व । भवितव्यञ्चात्र पार्व्वत्यैवेत्याह, योषितस्तु स्त्रीषु मध्ये 'यतश्च निर्द्धारणम्' इति सप्तमी । क्षमा शक्ता तस्य हरस्य वीर्य्य रेत तस्य निषेक क्षरण तस्य भूमि क्षेत्र सा पार्व्वती एव इति आत्मभुवा ब्रह्मणा उपदिष्टम् 'उभे एव क्षम वोढुम्' इत्यादिनोक्तम इत्यर्थ ॥ १६ ॥

सापीदानी सन्निकृष्टैव तस्येत्याह, गुरोरिति । नगेन्द्रकन्या पार्व्वती च गुरो पितु नियोगात शासनात् अधित्यकाया हिमाद्रे ऊर्द्धभूमौ 'भूमिरूर्द्धमधित्यका' इत्यमर । 'उपाधिभ्या त्यकन्नासन्नारूढयो' इति त्यकन्प्रत्यय । तपस्यन्त तपश्चरन्तम्, 'कर्म्मणो रोमन्थतपोभ्या वर्त्तिचरो ' इति क्यङ्-

१ अन्वास्ते सेवते । अनुपर्व्वात् आसधातोर्वर्त्तमाने लट प्रथमपुरुषैकवचनम् ।

तद्गच्छ सिद्धैर कुरु देवकार्य्यम्
अर्थोऽयमर्थान्तरभाव्य१ एव।
अपेक्षते प्रत्ययमुत्तम त्वा
वीजाङ्कुर प्रागुदयादिवाम्भ ॥ १८ ॥
तस्मिन् सुराणा विजयाभ्युपाये
तवैव नामास्त्रगति कृती त्वम्।

प्रत्यय, तत शब्दप्रत्यय। स्थाणु रुद्रम अन्वास्ते उपास्ते इत्यर्थ इति इद मया अप्सरसा मुखेभ्य श्रुतम। न चैतदेतिह्यमात्र मित्याह, स वर्ग स अप्सरसा गण मत्प्रणिधि मम गूढचर प्रणिधि प्रार्थने चरे' इति यादव ॥ १७॥

तदिति। तत् तस्मात् सिद्धौ कार्य्यसिद्ध्यर्थ गच्छ देवकार्य्यं कुरु। आशिषि लोट। अयम अर्थ प्रयोजनम अर्थान्तर भाव्य कारणान्तरसाध्य एव, तच्च कारणान्तर पार्व्वतीसन्निधानम इति भाव 'अर्थ प्रकार विषय वित्तकारणवस्तुषु। अभिधेये च शब्दाना। वृत्तौ चापि प्रयोजने॥' इति विश्व। तथापि वीजसाध्य अङ्कुर वीजाङ्कुर उदयात् उत्पत्ते प्राक् अम्भ इव, त्वाम् उत्तम कारणम् अपेक्षते। प्रत्ययोऽधीनशपथज्ञान विश्वासहेतुषु' इत्यमर। तस्मादस्मिन्नर्थे तव चरमसहकारित्वादनन्यसाध्योऽयमर्थ इति भाव ॥ १८ ॥

तस्मिन्निति। सुराणा [illegible]याभ्युपाये जयस्य उपायभूते तस्मिन हरे अस्त्रगति [illegible] तव एव ना[illegible]। नामेति सम्भावनायाम। अन्यथा तु श[illegible]वनापि नास्ति इति भाव।

१ अन्य अ[illegible] अर्थान्तर तेन भा[illegible]व्य। भूधातोर्णिजन्तात् कर्म्मणि य।

अप्यप्रसिद्धं यशसे हि पुंसाम्
अनन्यसाधारणमेव[1] कर्म्म ॥ १९ ॥
सुरा: समभ्यर्थयितार एते
कार्य्यं त्रयाणामपि विष्टपानाम्।
चापेन ते कर्म्म न चातिहिंस्रम्
अहोवतासि स्पृहणीयवीर्य्य[2] ॥ २० ॥
मधुश्च ते मन्मथ[3] साहचर्य्यात्
असावनुक्तोऽपि सहाय एव।

अत: त्वं कृती कृतम् अस्यास्ति इति कृती कृतार्थ:। तथाहि, अप्रसिद्धम् अपि अनन्यसाधारणम् एव कर्म्म पुंसां यशसे हि, इदं तु प्रसिद्धमसाधारणञ्चेति अतियशस्करमिति भाव: ॥१९॥

प्रोत्साहनार्थं स्तौति, सुरा इति। एते सुरा: समभ्यर्थयितार: याचितार: कार्य्यं प्रयोजनं त्रयाणां विष्टपानाम् अपि सम्बन्धि सर्व्वलोकार्थम् इत्यर्थ: कर्म्म ते तव चापेन न तु अन्येन इति भाव: अतिहिंस्रम् अतिघातुकं च न। अहोवतेति सम्बोधने। 'अहोवतानुकम्पायां खेदे सम्बोधनेऽपि च' इति विश्व:। अथवा अहो आश्चर्य्ये वत इति आमन्त्रणे सन्तोषे चेति 'वतामन्त्रणसन्तोषखेदानुक्रोशविस्मये' इति विश्व:। स्पृहणीयवीर्य्यं असि आश्चर्य्यविक्रम: असि 'आश्चर्य्यं स्पृहणीयञ्च' इति नानार्थकोष: ॥२०॥

मधुश्चेति। हे मन्मथ। असौ मधुश्च वसन्त: अपि ते

---

१ अन्यै: साधारण: सामान्य: न भवति इति अनन्यसाधारणम्।

२ स्पृहणीयं काङ्क्षनीयं वीर्य्यं पराक्रम: यस्य स:।

३ मन: मथाति पीडयति य: स: मन्मथ: तत्सम्बोधने।

समीरणो नोदयिता भवेति
व्यादिश्यते केन हुताशनस्य[1] ॥ २१ ॥
तथेति शेषामिव भर्त्तुराज्ञाम्
आदाय मूर्द्ध्ना मदनः प्रतस्थे ।
ऐरावतास्फालनकर्कशेन[2]
हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥ २२ ॥

साहचर्य्यात् सहचरत्वात् एव अनङ्ग अपि अप्रेरित अपि सहाय सहकारी एव। तथाहि, समीरण वायु हुताशनस्य अग्ने नोदयिता प्रेरक भव इति केन व्यादिश्यते। अत्र मधु समीरणयोरुक्तिमन्तरेण सहायताकरण सामान्यधर्म्म स च वाक्यद्वये वस्तुप्रतिवस्तुभावेन पृथङ्निर्दिष्ट इति प्रतिवस्तू-पमालङ्कारोऽयम। तदुक्तम्, 'यत्र सामान्यनिर्देश पृथग्वाक्य-द्वये यदि। गम्यौपम्याश्रिता सा स्यात् प्रतिवस्तूपमा मता॥' इति ॥ २१ ॥

तथेति। तथास्तु इति भर्त्तु स्वामिन शेषाम इव प्रसाद दत्ता मालाम् इव 'प्रसादान्निजनिर्म्माल्यदाने शेषेति कीर्त्तिता' इति विश्व। 'माल्याचतादिदाने स्त्री शेषा' इति वैजयन्ती केशवौ। आज्ञा मूर्द्ध्ना आदाय शिरसा गृहीत्वा मदन प्रतस्थे 'समवप्रविभ्य स्थ' इत्यात्मनेपदम्। इन्द्र ऐरावतास्फालनेन प्रोत्साहनार्थेन ताड़नेन कर्कशेन परुषेण हस्तेन तदङ्ग मदन देह पस्पर्श हस्तस्पर्शेन सम्भावयामास इत्यर्थ। शेषामिवाज्ञा मित्यत्र साधकबाधकप्रमाणाभावादुपमोत्प्रेक्षयो सन्देहशङ्कर

१ हुतम् आज्यादिकम् अश्नाति भुङ्क्ते य स तस्य।

२ इरा जल विद्यते यस्य स इरावान् समुद्र तस्मात् जात ऐरावत

स माधवेनाभिमतेन सख्या
रत्या च साशङ्कमनुप्रयात ।
अङ्गव्ययप्रार्थितकार्य्यसिद्धि
स्थाण्वाश्रम हैमवतं जगाम ॥ २३ ॥

तस्मिन् वने संयमिना मुनीना
तप समाधे, प्रतिकूलवर्त्ती ।
सङ्कल्पयोनेरभिमानभूतम्[१]
आत्मानमाधाय मधुर्जजृम्भे ॥२४॥

इति । यदि भर्त्रा शेषापि दत्ता तदा तामाशामिवेत्युपमा । अथ न दत्ता तर्हि शेषात्वेनोत्प्रेक्षिता । शेषादानन्तु सन्दिग्ध मिति ॥ २२ ॥

स इति । स मदन अभिमतेन प्रियेण सख्या सुहृदा माधवेन वसन्तेन रत्या स्वदेव्या च साशङ्क सङ्कटमापतित मिति सभयम अनप्रयात सन् तथा अङ्गस्य व्ययेन अपि प्रार्थिता कार्य्यसिद्धि येन स तथोक्त शीर्त्त्वा मृत्वापि सर्व्वथा देवकार्य्य साधयिष्यामीति कृतनिश्चय सन् इत्यर्थं । हैमवत हिमवति भव स्थाणो रुद्रस्य आश्रम जगाम ॥ २३ ॥

तस्मिन्निति । तस्मिन् वने स्थाण्वाश्रमे संयमिना समाधि मता मुनीना तपस समाधे एकाग्रताया प्रतिकूल वर्त्तते इति प्रतिकूलवर्त्ती निरोधो मधु वसन्त सङ्कल्पयोने मनोभवस्य अभिमानभूत गर्व्वहेतुभूतम् इत्यर्थ । कार्य्यकारणयोरभेदोप चार । आत्मान निजस्वरूपम् आधाय सन्निधाप्य जजृम्भे प्रादु-र्बभूव वसन्तधर्म्मान् प्रवर्त्तयामास इत्यर्थ ॥ २४ ॥

---

१ सङ्कल्पयोने सङ्कल्प मानस योनि प्रभव यस्य स तस्य ।

कुवेरगुप्तां दिशमुष्णरश्मौ
गन्तुं प्रवृत्ते समयं विलङ्घ्य।
दिग् दक्षिणा गन्धवहं१ मुखेन
व्यलीकनिश्वासमिवोत्ससर्ज॥ २५॥

वसन्तप्रादुर्भावमाह, कुवेरेति। उष्णरश्मौ सूर्य्ये साहसिके च नायके समयं दक्षिणायनकालं सङ्गमकालं च विलङ्घ्य अकाण्डे व्यतिक्रम्य कुवेरगुप्तां धनपतिपालितां कृतमितशरीरेण केनचित् रक्षितां च दिशम् उदीचीं स्त्रीलिङ्गाभिधानां काञ्चित नायिकां च गन्तुं चलितुं सङ्गन्तुं च प्रवृत्ते सति दक्षिणा दिक् दाक्षिण्यवती नायिका च मुखेन अग्रभागेण वक्त्रेण च वहति इति वहः। पचाद्यच्। गन्धस्य वहः गन्धवहस्तम् अनिलं व्यलीकेन दुःखेन निश्वासः तं व्यलीकनिश्वासम् इव 'दुःखे वैलक्ष्ये व्यलीकमप्रियाकार्य्यवञ्चने' इति वैजयन्ती उत्ससर्ज प्रवर्त्तयामास स्वभर्त्तरि॰ समयोल्लङ्घनेन पराङ्गनासङ्गति प्रवृत्ते सति स्त्रियो दाक्षिण्यादकिञ्चित्करा दुःखात् निश्वसन्ति इति भावः। उत्तरायणे सति मलयानिलाः प्रवृत्ता इति वाक्यार्थः। अत्रोत्प्रेक्षालङ्कारः न च समासोक्तिरेवेयमुत्प्रेक्षानुप्रविष्टेति शङ्कितव्यं केवलविशेषणसामर्थ्यादेव अप्रस्तुतप्रतीतौ सोक्तिष्ठते अत्र तु दक्षिणेति विशेष्यसामर्थ्यादपि नायिका प्रतीयते। न च श्लेष एव प्रकृताप्रकृतविषयः उभयश्लेषे श्लिष्टविशेष्यानङ्गीकारात्। तस्माच्छब्दशक्तिमूलोऽयं ध्वनिः। स च व्यलीकनिश्वासरूपचेतनधर्म्मसम्भावनार्थं दक्षिणस्या दिशो नायिकया सहाभेदमापादयन् अभेदलक्षणातिशयोक्त्युपजीविनीं

१ गन्धं वहति यः स गन्धवहः। वहधातोरच्।

असूत सद्यः१ कुसुमान्यशोकः
स्कन्धात् प्रभृत्येव सपल्लवानि२ ।
पादेन नापैक्षत सुन्दरीणां
सम्पर्कमाशिञ्जितनूपुरेण३ ॥ २६ ॥
सद्यः प्रवालोद्गमचारुपत्रे
नीते समाप्तिं नवचूतबाणे ।

निश्वासमिवेति वाच्योत्प्रेक्षा निर्वहतीति वाच्यसिद्ध्यङ्गभूत इत्युत् प्रेक्षाम ॥ २५ ॥

असूतेति । अशोकः वृक्षविशेषः सद्यः स्कन्धात् प्रकाण्डात प्रभृति एव स्कन्धात् आरभ्य इत्यर्थः 'भाष्यकारवचनात् प्रभृति योगे पञ्चमी इति कैयटः । भाष्यञ्च मूलात्प्रभृत्यग्रात् वृक्षा स्तावुवन्तीति कार्त्तिक्याः प्रभृति आग्रहायणी मासे इत्यादि । सपल्लवानि कुसुमानि असूत उभयमप्यजीजनत् इत्यर्थः । आशिञ्जितं नूपुरं यस्य तेन । शिञ्जधातोरकर्म्मकात 'गत्यर्थाकर्म्मक' इत्यादिना कर्त्तरि क्तः । सुन्दरीणां पादेन सम्पर्कं ताड़नं न अपैक्षत । 'सनूपुररवेण स्त्रीचरणेनाभिताड़नम । दोहदं यदशोकस्य ततः पुष्पोद्गमो भवेत् ॥' इति । तथाहि, पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति वकुलो मुखशीधुसिक्तः । आलोकितः कुरवकः कुरुते विकाशम आलोडितस्तिलक उत्कलिको विभाति ॥' ॥ २६ ॥

सद्य इति । मधुः वसन्तः एव इषुकारः प्रवालोद्गमा

१ तत्क्षणम अविलम्बेनैव इति यावत् ।

२ पल्लवैः सह वर्त्तमानानि नूतनपल्लवघटितानि इत्यर्थः ।

३ आशिञ्जितं आरचितं ।

निवेशयामास मधुर्द्विरेफान्
नामाक्षराणीव मनोभवस्य ॥ २७ ॥
वर्णप्रकर्षे सति कर्णिकारं
दुनोति निर्गन्धतया[१] स्म चेतः ।
प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृज प्रवृत्तिः ॥ २८ ॥

पल्लवाङ्कुरा एव चारूणि पत्राणि पत्ता यस्य तस्मिन 'पत्रं वाहनपक्षयो' इत्यमर । नव चूत चूतकुसुम तत् एव बाण तस्मिन नवचूतबाणे समाप्ति नीते सति, सद्य मनोभवस्य धन्विन नामाक्षराणि इव, द्विरेफान भ्रमरान निवेशयामास निदधौ । अत्र प्रवालपत्र इत्याद्येकदेशविवर्त्तिरूपक मधो रिपुकारत्व रूपयत नामाक्षराणीवेत्युत्प्रेक्षाया निमित्तमित्येक देशविवर्त्तिरूपकोत्थापितेयमुत्प्रेक्षा ॥ २७ ॥

वर्णेति । कर्णिकार कर्णिकारकुसुमम 'अवयवे च प्राण्यो षधिवृक्षेभ्य' इति उत्पन्नस्य तद्धितस्य 'पुष्पफलमूलेषु बहुलम' इति लुक्, एवमन्यत्रापि द्रष्टव्यम । वर्णप्रकर्षे वर्णोत्कर्षे सति अपि निर्गन्धतया हेतुना चेत दुनोति स्म पर्य्यतापयत । 'लट् स्मे' इति भूतार्थे लट । तथाहि, प्रायेण विश्वसृज विधातु प्रवृत्ति गुणाना सामग्र्यविधौ साकल्यसम्पादनविषये पराङ्मुखी सर्व्वत्रापि वस्तुनि किञ्चिद् वैकल्य सम्पादयति यथा चन्द्रे कलङ्क । अत कर्णिकारेऽपि नैर्गन्ध्य युज्यते इति भाव । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कार ॥ २८ ॥

१ नि नास्ति गन्ध यस्य तत् तस्य भाव तया गन्धहीनतया ।

बालेन्दुवक्राण्यविकाशभावात्[१]
बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम् ॥ २९ ॥
लग्नद्विरेफाञ्जनभक्तिचित्रं
मुखे मधुश्रीस्तिलकं प्रकाश्य ।

बालेन्द्विति । अविकाशभावात् निर्विकाशत्वात् मुकुलत्वात् हेतोः बालेन्दुः इव वक्राणि अतिलोहितानि अति रक्तानि पलाशानि किंशुकपुष्पाणि 'पलाशे किंशुकः पर्णे' इत्यमरः । वसन्तेन पुंसा समागतानां सङ्गतानां वनस्थलीनां स्त्रीणां सद्यः सद्योदत्तानि, पुराणेष्वहिलौहित्याभावात् इति भावः । नखक्षतानि इव बभुः । अत्र वसन्तस्य वनस्थलीनाञ्च विशेषणसाधारण्यान्नायकव्यवहारप्रतीतेः समासोक्तिस्तावदस्ति । नखक्षतानीवेति जातिस्वरूपोत्प्रेक्षा वक्रत्वलौहित्यगुणनिमित्ता जागर्त्ति । सा च नायकव्यवहाराश्रितसमासोक्तिगर्भिण्येवोत्तिष्ठत इत्युभयोरेककालतैव विशेषणसामर्थ्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिष्यत इति हि लक्षणम् ॥ २८ ॥

लग्नेति । मधुश्रीः वसन्तलक्ष्मीः लग्नद्विरेफा एव अञ्जनभक्तयः कज्जलरचनाः ताभिः चित्रं चित्रवर्णं तिलकं पुष्पविशेषम् एव तिलकं विशेषकं मुखं प्रारम्भः तस्मिन् एव मुखे वक्त्रे प्रकाश्य प्रकटय्य बालारुणकोमलेन प्रातार्कसुन्दरेण रागेण अरुणिम्ना तेन एव लाक्षारागेण चूतप्रवाले एव ओष्ठे त

१ अविकाशभावात् नास्ति विकाशः येषां तानि अविकाशानि तेषां भावः तस्मात् ।

रागेण बालारुणकोमलेन[1]
चूतप्रवालोष्ठमलञ्चकार ॥ ३० ॥
मृगाः प्रियालद्रुममञ्जरीणां
रजःकणैर्विघ्नितदृष्टिपाताः[2]।
मदोद्धताः[3] प्रत्यनिलं विचेरु
र्वनस्थलीर्मर्म्मरपत्रमोक्षाः ॥ ३१ ॥
चूताङ्कुरास्वादकषायकण्ठः
पुंस्कोकिलो यन्मधुरं चुकूज।

चूतप्रवालोष्ठम् अलञ्चकार प्रसाधयामास। अत्र रूपकालङ्कारः ॥ ३० ॥

मृगा इति। प्रियालद्रुमाः राजादनवृक्षाः 'राजादनः प्रियालः स्यात्' इत्यमरः। तेषां मञ्जर्य्यः तासां रजःकणैः विघ्निताः सञ्जातविघ्नाः दृष्टीनां पाताः प्रसराः येषां ते तथोक्ताः मदोद्धताः मृगाः प्रत्यनिलम् अनिलाभिमुखं मर्म्मराः मर्म्मरशब्दवन्तः पत्रमोक्षाः जीर्णपर्णपाताः यासु ताः वनस्थलीः विचेरुः वनप्रदेशेषु चरन्ति स्म। 'देशकालाध्वगन्तव्याः कर्म्मसंज्ञा ह्यकर्म्मणाम्' इति चरतेः सकर्म्मकत्वम् ॥ ३१ ॥

चूतेति। चूताङ्कुराणाम् आस्वादेन कषायकण्ठः रक्तकण्ठः 'सुरभावपथे रक्ते कषायः' इति केशवः। पुमान् कोकिलः पुंस्कोकिलः, पुंग्रहणं प्रागल्भ्यद्योतनार्थम्। मधुरं चुकूज इति यत् तत् कूजनम् एव मनस्विनीनां मानविघाते रोषनिरासे

---

1 बालः अरुणः स इव कोमलः तेन।

2 विघ्नः सञ्जातः एषामिति विघ्निताः व्याहताः।

3 मदेन मत्ततया उद्धताः उच्छृङ्खलाः।

मनस्विनीमानविघातदक्षं
तदेव जातं वचनं स्मरस्य ॥ ३२ ॥
हिमव्यपायाद् विशदाधराणाम्
आपाण्डरीभूतमुखच्छवीनाम्२ ।
स्वेदोद्गमः किम्पुरुषाङ्गनानां
चक्रे पदं पत्रविशेषकेषु ॥ ३३ ॥
तपस्विनः स्थाणुवनौकसस्ताम्
आकालिकीं वीक्ष्य मधुप्रवृत्तिम्३ ।

इत्थं स्मरस्य वचनं मानं त्यजत इति आज्ञावचनं जातं कोकिलकूजितश्रवणानन्तरं स्मराज्ञया इव मानं जहुरित्यर्थः ॥ ३२ ॥

हिमेति । हिमस्य व्यपायात् अपगमात् विशदा नीरुजा अधरा ओष्ठा यासां तासाम् आपाण्डरीभूतमुखच्छवीनां कुङ्कुमपरिहारात् इति भावः । किम्पुरुषाङ्गनानां पत्रविशेषकेषु पत्ररचनासु स्वेदोद्गमः पदं चक्रे घर्मोदयात् स्वेदोदयोऽभूत् इत्यर्थः । विशदाधरत्वं मधूच्छिष्टराहित्यात् इति भावः । हेमन्तेषु नार्य्यो बिम्बोष्ठेषु मधूच्छिष्टं शीतभयाद् दधतीति प्रसिद्धम् ॥ ३३ ॥

तपस्विन इति । स्थाणोः वनम् ओकः येषां ते तपस्विनः तत्रत्या मुनयः समानकालं व्याप्नोति अस्याः आकालिकीम् अकालभवत्वादुत्पत्त्यनन्तरविनाशिनीम् इत्यर्थः । 'आकालिक

१ मनस्विन्यः मानवत्यः ।

२ न आपाण्डराः आपाण्डराः भूताः मुखच्छविः मुखकान्तिः यासां ताः तासाम् ।

३ मधोः वसन्तस्य प्रवृत्तिं आविर्भावं ताम् ।

प्रयत्नसंस्तम्भितविक्रियाणां
कथञ्चिदीशाः[1] मनसा बभूवु ॥ ३४ ॥
तं देशमारोपितपुष्पचापे
रतिद्वितीये मदने प्रपन्ने।
काष्ठागतस्नेहरसानुविद्ध
द्वन्द्वानि भावं क्रियया विवव्रु ॥ ३५ ॥
मधु द्विरेफ कुसुमैकपात्रे
पपौ प्रिया स्वामनुवर्त्तमान ।

डाद्यन्तवचने' इति समानकालार्दिकट्प्रत्यय प्रकृतेरकाल आदेशश्च निपात । 'टिड्ढाणञ्' इत्यादिना ङीप् । केचिद् कालाट्ठञित्याध्यात्मादित्वाद् भवार्थे ठगित्याहु । ताम् आकालिकी मधुप्रवृत्ति वीक्ष्य प्रयत्नेन संस्तम्भितविक्रियाणा निरुद्धविकाराणा मनसा कथञ्चित् ईशा नियन्तार बभूव ॥ ३४ ॥

तमिति। आरोपितम् अधिज्य कृत पुष्पचाप येन तस्मिन् रति द्वितीया यस्य तस्मिन् रतिसहाये मदने त देश स्थाणाश्रम प्रपन्ने प्राप्ते सति द्वन्द्वानि स्थावराणि जङ्गमानि च मिथुनानि काष्ठा उत्कर्ष 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमर। ता गत य स्नेह इष्टसाधननिबन्धन प्रेमापरनामा ममताभिमान 'प्रेमा ना प्रियता हार्द्द प्रेम स्नेह' इत्यमरः। स एव रस तेन अनुविद्ध सम्पृक्त भाव रत्याख्य शृङ्गार भाव क्रियया कार्य्यभूतया चेष्टया विवव्रु प्रकटीचक्रु शृङ्गार-चेष्टा प्रावर्त्तन्त इत्यर्थ ॥ ३५ ॥

ताश्चेष्टा आह मध्वित्यादिभिश्चतुर्भि, मध्विति। द्वौ

---

१ ईश्यते प्रभवन्ति ये ते ईशा प्रभव। ईशधातो च।

शृङ्गेण च स्पर्शनिमीलिताक्षीं१
मृगीमकण्डूयत कृष्णसारः ॥ ३६ ॥
ददौ रसात् पङ्कजरेणुगन्धि
गजाय गण्डूषजलं करेणुः ।
अर्द्धोपभुक्तेन बिसेन२ जायां
सम्भावयामास रथाङ्गनामा३ ॥ ३७ ॥

रेफौ वर्णविशेषौ यस्य स द्विरेफः भ्रमरः । उपचारात् तदर्थो ऽपि द्विरेफ उच्यते । यथाह कैयटः, 'शब्दधर्म्मेणाप्यर्थस्य व्यपदेशो दृश्यते यथा भ्रमरशब्दस्य द्विरेफत्वात् द्विरेफो भ्रमरः ।' कुसुमम् एव एकं साधारणं पात्रं तस्मिन् मधु मकरन्दम् । मधु मद्ये पुष्परसे' इति विश्वः । स्वां प्रियां भृङ्गीम् अनुवर्त्तमानः अनुसरन् पपौ तत्पीतशेषं पपौ इत्यर्थः । कृष्णश्चासौ सारः शबलश्च कृष्णसारः कृष्णमृगः 'वर्णो वर्णेन' इति समासः । स्पर्शेन स्पर्शसुखेन निमीलिताक्षीं मृगीं शृङ्गेण अकण्डूयत कर्षितवान् । 'कण्ड्वादिभ्यो यक्' इति यक्, ततः कर्त्तरि लङ् ॥ ३६ ॥

ददाविति । रसात् अतिरागात् करेणुः करिणी 'करेणुरिभ्यां स्त्री नेभः' इत्यमरः । पङ्कात् जायते इति पङ्कजं तस्य रेणुः पङ्कजरेणुः पङ्कजरेणुगन्धोऽस्यास्तीति पङ्कजरेणुगन्धि गण्डूषजलं मुखन्तर्धृतजलं गजाय ददौ । रथाङ्गनामा चक्रवाकः अर्द्धं यथा तथा उपभुक्तेन अर्द्धजग्धेन बिसेन जायां सम्भावयामास स्वजग्धशेषं ददौ इत्यर्थः ॥ ३७ ॥

१ स्पर्शेन निमीलिते अक्षिणी यया सा ता तथोक्ताम् ।

२ मृणालेन ।

३ रथाङ्गं चक्रं नाम यस्य सः ।

गीतान्तरेषु श्रमवारिलेशैः
किञ्चित्समुच्छ्वासितपत्रलेखम् ।
पुष्पासवाघूर्णितनेत्रशोभि
प्रियामुखं किम्पुरुषश्चुचुम्बे ॥ ३८ ॥

पर्याप्तपुष्पस्तवकस्तनाभ्यः
स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापु-
र्विनम्रशाखाभुजबन्धनानि ॥ ३९ ॥

गीतेति। किम्पुरुषः किन्नरः श्रमवारिलेशैः स्वेदोदबिन्दुभिः किञ्चित् ईषत् समुच्छ्वासिता विश्लेषिता पत्रलेखा यस्य तत् पुष्पाणाम् आसवः मद्यं पुष्पासवः पुष्पोद्भवमद्यम् इत्यर्थः वसन्ते मधूकस्य सम्भवात्। पथ्यवासितमिति केचित्। तेन आघूर्णिताभ्यां उद्भ्रान्ताभ्यां नेत्राभ्यां शोभते इति तथोक्तं प्रियामुखं गीतान्तरेषु गीतमध्येषु चुचुम्बे ॥ ३८ ॥

पर्याप्तेति। पर्याप्ताः समग्राः पुष्पस्तवका एव स्तना यासां ताभ्यः 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पात् न ङीप्। स्फुरन्तः प्रवालाः पल्लवा एव ओष्ठाः तैः मनोहराभ्यः लता एव वध्वः ताभ्यः सकाशात् तरवः अपि, लिङ्गादेव पुंस्त्वं गम्यते। विनम्राः शाखा एव भुजाः तैः बन्धनानि अवापुः ताभिरालिङ्गिता इत्यर्थः, स्थावराणामपि मदनविकारोऽभूत् किमुतान्येषाम् इति भावः। एतच्च तरुलतानामपि चेतनत्वादुक्तम्। यथाह मनुः, 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विता' इति। अत्र रूपकालङ्कारः ॥ ३९ ॥

श्रुताप्सरोगीतिरपि[१] क्षणेऽस्मिन्
हरः प्रसंख्यानपरो[२] बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति ॥ ४० ॥
लतागृहद्वारगतोऽथ नन्दी
वामप्रकोष्ठार्पितहेमवेत्रः ।
मुखार्पितैकाङ्गुलिसंज्ञयैव
मा चापलायेति गणान् व्यनैषीत् ॥ ४१ ॥

श्रुतेति । तस्मिन् क्षणे वसन्ताविर्भावकाले भगवान् हरः श्रुताप्सरोगीतिः अपि दिव्याङ्गनागानमाकर्णयन्नपि इत्यर्थः प्रसंख्यानपरः आत्मानुसन्धानपरः बभूव । तथाहि, आत्मनः चित्तस्य ईश्वराणां नियन्तॄणां वशिनाम् इत्यर्थः, विहन्यन्ते एभिः इति विघ्नाः प्रत्यूहाः । घञर्थे कप्रत्ययः । जातु कदाचित् अपि समाधिभेदे समाधिभञ्जने प्रभवः समर्थाः न भवन्ति ॥ ४० ॥

लतेति । अथ लतागृहद्वारं गतः वामे प्रकोष्ठे अर्पितहेमवेत्रः धारितहेमदण्डः नन्दी नन्दिकेश्वरः 'नन्दी भृङ्गिरिटस्तण्डुनन्दिनौ नन्दिकेश्वरे' इति कोषः । मुखे अर्पितायाः सरोषविस्मयस्तिमितावलोकं निहितायाः एकस्याः अङ्गुलेः तर्जन्याः संज्ञया सूचनया एव 'संज्ञा स्याच्चेतना नाम हस्ताद्यैरर्थसूचना' इत्यमरः । गणान् प्रमथान् चापलाय चापल

१ श्रुताप्सरोगीतिः श्रुता अप्सरसां गीतिः येन सः ।
२ प्रसंख्याने परः प्रधानं यस्य सः आत्मानुसन्धाननिरतः ।

निष्कम्पवृक्ष१ निभृतद्विरेफ२
मूकाण्डज३ शान्तमृगप्रचारम्४ ।
तच्छासनात् काननमेव सर्व्वं
चित्रार्पितारम्भमिवावतस्थे५ ॥ ४२ ॥
दृष्टिप्रपातं परिहृत्य तस्य
काम पर शुक्रमिव प्रयाणे ।

कर्तुं मा भवत इति क्रियार्थोपपदस्य' इत्यादिना चतुर्थी। अनैषीत् शिक्षितवान् ॥ ४१ ॥

न केवल गणा एव विनीता किन्तु जरायुजादिचतुर्विध प्राणिजातमपीत्याह, निष्कम्पेति । निष्कम्पवृक्षम, इदमुद्भिज्जोपलक्षणम्, निभृतद्विरेफ निश्चलभृङ्ग, स्वेदजोपलक्षणमेतत् मूकाण्डज नि शब्दपक्षिसरीसृपादिकम् एतेन अण्डजजातिरुक्ता, शान्तमृगप्रचार जरायुजोपलक्षणमेतत्, सर्व्वम् एव कानन तच्छासनात् नन्दीश्वराज्ञया चित्रार्पितारम्भ चित्र लिखितारम्भम् इव अवतस्थे। 'मृगवाद्या जरायुजा । स्वेदजा कृमिदंशाद्या पक्षिसर्पादयोऽण्डजा । उद्भिदस्तरुगुल्माद्या' इत्यमर ॥ ४२ ॥

दृष्टीति। काम प्रयाणे यात्राया पुरोगत शुक्र यस्मिन्

१ निष्कम्पा निश्चला वृक्षा यस्मिन तत् ।

२ निभृता द्विरेफा यस्मिन तत् ।

३ अण्डेभ्य जायन्ते ये ते अण्डजा , मूका अण्डजा यस्मिन तत् ।

४ शान्त मृगाणां प्रचार समन्तात् सञ्चरण यस्मिन् तत् ।

५ चित्रार्पित'रम्भ चित्रे आलेख्ये अर्पित निखित आरम्भ उद्योग' यस्य तत ।

प्रान्तेषु संसक्तनमेरुशाखं
  ध्यानास्पदं भूतपतेर्विवेश ॥ ४३ ॥
स देवदारुद्रुमवेदिकायां
  शार्दूलचर्म्मव्यवधानवत्याम् ।
आसीनमासन्नशरीरपातः१
  त्रियम्बकं संयमिनं ददर्श ॥ ४४ ॥
पर्य्यङ्कबन्धस्थिरपूर्व्वकायम्
  ऋज्वायतं२ सन्नमितोभयांसम् ।

दर्शितं पुरःशुक्रं देशम् इव 'प्रतिशुक्रं प्रतिबधं प्रत्यङ्गारकमेव च । अपि शक्रसमो राजा हतसैन्यो निवर्त्तते ॥' इति शास्त्रनिषेधात् । तत्र दृष्टिप्रपातं दृग्विषयं परिहृत्य प्रान्तेषु पार्श्वदेशेषु संसक्ताः अन्योन्यसंसृष्टाः नमेरूणां सुरपुन्नागानां शाखा यस्य तत्, तिरोधानयोग्यम् इति भावः । भूतपतेः शिवस्य ध्यानास्पदं समाधिस्थानम् 'आस्पदं प्रतिष्ठायाम्' इति निपातः । विवेश ॥ ४३ ॥

स इति । आसन्नशरीरपातः आसन्नमृत्युः स कामः शार्दूलचर्म्मणा व्यवधानवत्यां व्याघ्रचर्म्मास्तृतायाम् इत्यर्थः । 'मोक्षश्रीर्व्याघ्रचर्म्मणि' इति प्राशस्त्यात् इति भावः । देवदारुद्रुमवेदिकायाम् आसीनम् उपविष्टं संयमिनं समाधिनिष्ठं त्रियम्बकं त्रिनेत्रं ददर्श । त्र्यम्बकमित्युक्ते पादपूरणव्यत्यासात्त्रियम्बकमिति पादपूरणार्थोऽयमियङादेशश्छान्दसः महाकविप्रयोगादभियुक्तैरङ्गीकृतः । केचित् साहसिकास्त्रिलोचनमिति पेठुः ॥ ४४ ॥

तमेव देवं षड्भिः श्लोकैर्वर्णयति, पर्य्यङ्केति । पर्य्यङ्कबन्धेन

---

१ आसन्नः सन्निहितः शरीरपातः देहपातः मृत्युः इति यावत् यस्य सः ।

२ ऋजुः सरलः आयतः दीर्घश्च तम् ।

उत्तानपाणिद्वयसन्निवेशात्
प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५ ॥
भुजङ्गमोन्नद्धजटाकलाप
कर्णावसक्तद्विगुणाक्षसूत्रम् ।
कण्ठप्रभासङ्गविशेषनीलां
कृष्णत्वचं ग्रन्थिमतीं दधानम्१ ॥ ४६ ॥
किञ्चित्प्रकाशस्तिमितोग्रतारै
र्भ्रूविक्रियायां विरतप्रसङ्गैः२ ।

वीरासनेन स्थिरपूर्व्वकाय निश्चलोत्तरार्द्धम् ऋजु आयतस्य स्कन्धायत त सन्नमितौ उभौ असौ यस्य त तथोक्तम्। वृत्तिविषये उभशब्दस्थाने उभयशब्दाप्रयोग इत्युक्त कैयटेन। उत्तान ऊर्द्धतल य पाणिद्वयस्य सन्निवेश सस्थान तस्मात् अङ्कमध्ये प्रफुल्ल राजीव पङ्कज यस्य तम् इव स्थितम। वीरासने वशिष्ठ, 'एक पादमथैकस्मिन् विन्यस्योरुणि सस्थितम। इत रस्मिन तथैवोरु वीरासनमुदाहृतम॥' इति। तथा योग सारे उत्तानिते करतले करमुत्तानित परम्। आदायाङ्कगत कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम॥ इति॥ ४५॥

भुजङ्गमेति। भुजङ्गमेन उन्नद्ध उन्नमय्य नद्धः जटाकलाप येन त तथोक्त कर्णावसक्त कर्णावलम्बि इत्यर्थ अत एव द्विगुण द्विरावृत्तम् अक्षसूत्रम् अक्षमाला यस्य त कण्ठप्रभाया सङ्गेन मिश्रणेन विशेषनीलाम् अतिनीला ग्रन्थिमतीं बन्धन युक्ता कृष्णत्वच कृष्णमृगाजिन दधानम्॥ ४६॥

किञ्चिदिति। किञ्चित प्रकाशा ईषत् प्रकाशा स्तिमिता

१ धारयन्त वसानम इति यावत ।
२ विरत निवृत्त प्रसङ्ग येषा तानि तै ।

नेत्रैरविस्पन्दितपक्ष्ममालै १
लक्ष्यीकृतघ्राणमधोमयूखै. ॥ ४७ ॥
अवृष्टिसंरम्भमिवाम्बुवाहम् २
अपामिवाधारमनुत्तरङ्गम् ।
अन्तश्चराणां मरुतां निरोधात्
निवातनिष्कम्पमिव प्रदीपम् ॥ ४८ ॥

निश्चला उग्राश्च तारा कनीनिका येषां ते । 'तारकाक्ष्णः कनीनिका' इत्यमरः । भ्रूविक्रियायां भ्रूविक्षेपे विरतप्रसङ्गैः प्रसक्तिरहितैः अविस्पन्दितपक्ष्ममालैः अचलितपक्ष्मपङ्क्तिभिः अधःप्रसृता मयूखा येषां तैः अधोमयूखैः नेत्रैः, त्रिनेत्रत्वाद् बहुवचनम् लक्ष्यीकृतघ्राणं नासाग्रनिविष्टदृष्टिम् इत्यर्थः । करणान्यबहिष्कृत्य स्थाणुवन्निश्चलात्मकः । आत्मनः हृदये ध्यायेन्नासाग्रन्यस्तलोचनः ॥' इति योगसारे ॥ ४७ ॥

अवृष्टीति । अन्तः चरन्ति इति अन्तश्चराः तेषां मरुतां प्राणादीनां निरोधात् हेतोः अवृष्टिसंरम्भम् अविद्यमानवर्षसम्भ्रमम् अम्बुवाहम् इव स्थितम्, एतेन प्राणनिरोधः सूचितः । अनुत्तरङ्गम् अनुद्गततरङ्गम् अपाम् आधारं ह्रदम् इव स्थितम्, एतेन अपाननिरोधः सूचितः । तथा निवाते निर्वातदेशे निष्कम्पं निश्चलं प्रदीपम् इव स्थितम्, एतेन शेषवायुनिरोधः सूचितः । 'निवातावाश्रयावातौ' इत्यमरः ॥ ४८ ॥

१ अविस्पन्दिता पक्ष्मणां माला येषां तानि तैः ।

२ अवृष्टिसंरम्भं नास्ति वृष्ट्या संरम्भः यस्मिन् स तम् ।

कपालनेत्रान्तरलब्धमार्गैः १
ज्योतिःप्ररोहैरुदितैः शिरस्तः।
मृणालसूत्राधिकसौकुमार्य्यां
बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः २॥ ४९॥
मनो नवद्वारनिषिद्धवृत्ति
हृदि व्यवस्थाप्य समाधिवश्यम्।
यमक्षरं क्षेत्रविदो विदुस्तम्
आत्मानमात्मन्यवलोकयन्तम्॥ ५०॥

कपालेति। कपालनेत्रान्तरेण ब्रह्मरन्ध्रविवरेण लब्धमार्गैः शिरस्तः ब्रह्मरन्ध्रात्। पञ्चम्यास्तसिल्। उदितैः उद्गतैः ज्योतिःप्ररोहैः तेजोऽङ्कुरैः मृणालसूत्राधिकसौकुमार्य्यं मार्दवं यस्याः तां बालस्य इन्दोः शिरश्चन्द्रस्य लक्ष्मीं ग्लपयन्तम्॥ ४९॥

मन इति। नवभ्यः द्वारेभ्यः निषिद्धा निवर्त्तिता वृत्तिः सञ्चारः यस्य तत् तथोक्तं समाधिना प्रणिधानेन वश्यं वशं गतम्। यत्प्रत्ययः। 'प्रणिधानं समाधानं समाधिश्च समाश्रयः' इति हलायुधः। मनः हृदि हृदयाख्ये अधिष्ठाने व्यवस्थाप्य। तथाच वशिष्ठः, 'यतो निर्याति विषयान् यस्मिंश्चैव प्रलीयते। हृदयं तद्विजानीयात् मनसः स्थितिकारणम्॥' इति। क्षेत्रविदः क्षेत्रज्ञाः पुरुषाः यं न क्षरति इति अक्षरम् अविनाशिनं विदुः विदन्ति 'विदो लटो वा' इति झेर्जुस्। तम् आत्मानम् आत्मनि स्वस्मिन् अवलोकयन्तं साक्षात् कुर्व्वन्तम्, स्वातिरेकेण परमात्मनोऽभावात् इति भावः॥ ५०॥

---

१ लब्धमार्गैः लब्धः मार्गः यैः तैः निर्गमप्रसरैः इत्यर्थः।

२ ग्लपयन्तं सौकुमार्य्यम्। ग्लायतेर्णिजन्तात् शतृ।

स्मरस्तथाभूतमयुग्मनेत्रं[१]
पश्यन्नदूरान्मनसाप्यधृष्यम्[२]।
नालक्षयत् साध्वससन्नहस्तः
स्रस्तं[३] शरं चापमपि स्वहस्तात्॥ ५१॥
निर्वाणभूयिष्ठमथास्य वीर्य्यं
सन्धुक्षयन्तीव वपुर्गुणेन।
अनुप्रयाता वनदेवताभ्याम्
अदृश्यत स्थावरराजकन्या॥ ५२॥
अशोकनिर्भर्त्सितपद्मरागम्
आकृष्टहेमद्युतिकर्णिकारम्।

स्मर इति। स्मरः कामः तथाभूतं पूर्ब्बोक्तरूपं मनसा अपि अधृष्यम् अयुग्मनेत्रं विषमाक्षम् अदूरात् पश्यन् साध्वसेन सन्नहस्तः विस्मयपाणिः सन् स्वहस्तात् स्रस्तं शरं चापम् अपि चापञ्च न अलक्षयत न विवेद, भीतो मुह्यति इति भावः॥ ५१॥

निर्वाणेति। अथ निर्वाणेन नाशेन भूयिष्ठं निर्वाणभूयिष्ठं नष्टप्रायम् इत्यर्थः अस्य स्मरस्य वीर्य्यं बलं वपुर्गुणेन सौन्दर्य्येण सन्धुक्षयन्ती इव पुनरुज्जीवयन्ती इव स्थिता वनदेवताभ्यां सखीभूताभ्याम् अनुप्रयाता अनुगता स्थावरराजकन्या पार्व्वती अदृश्यत दृष्टा॥ ५२॥

तामेवाह चतुर्भिः, अशोकेति। अशोकपुष्पेण निर्भर्त्सिता

---

१ अयुग्मानि विषमाणि नेत्राणि यस्य स तम्।

२ मनसा अन्तःकरणेनापि अधृष्यम् अनाक्रम्यम्। सुदूरमास्तां तस्याक्रमणीयतागुणेनेति अपिशब्देन गम्यते।

३ शिथिलं सन्तं पतितम् इत्यर्थः।

मुक्ताकलापीकृतसिन्धुवार
वसन्तपुष्पाभरणं वहन्ती ॥ ५३ ॥
आवर्जिता किञ्चिदिव स्तनाभ्या
वासो वसाना तरुणार्करागम्।
पर्य्याप्तपुष्पस्तवकावनम्रा[१]
सञ्चारिणी पल्लविनी लतेव ॥ ५४ ॥
स्रस्ता नितम्बादवलम्बमाना
पुन पुन केशरदामकाञ्चीम्।

निरस्कृता पद्मरागा येन तत् तथोक्तम् आकृष्टहेमद्युतीनि
आहृतस्वर्णाभरणवर्णानि कर्णिकाराणि यस्मिन् तत तथोक्त
मुक्ताकलापीकृतानि सिन्धुवाराणि निर्गुण्डीकुसमानि यस्मिन्
तत। 'सिन्धुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि' इत्यमर।
वसन्तपुष्पाणि एव आभरणं वहन्ती ॥ ५३ ॥

आवर्जितेति। स्तनाभ्या किञ्चित आवर्जिता ईषत आन सितवपु तरुणार्कस्य राग इव राग यस्य तत बालार्कारुणम् इत्यर्थ। उपमानपूर्व्वपदो बहुव्रीहि, उत्तरपदलोपश्च। वास वसाना आच्छादयन्ती अत एव पर्य्याप्तपुष्पस्तवकावनम्रा पल्लविनी किशलयवती सञ्चारिणी लता इव स्थिता इति शेष ॥ ५४ ॥

स्रस्तामिति। स्थानविदा निक्षेपयोग्यस्थानवेदिना स्मरेण न्यासीकृता निक्षेपीकृता कर्म्मणि प्रभवति इति कार्म्मुक धनु 'कर्म्मण उकञ्' इति उकञ्प्रत्यय। तस्य द्वितीया मौर्व्वीम् इव स्थिताम्, अत हि न्यस्ता मौर्वी उत्तरन हरवैरनिर्यात

[१] पर्य्याप्ता प्रचुरा पुष्पस्तवका कुसुमगुच्छा तै अवनम्रा अवनता।

न्यासीकृता[1] स्थानविदा स्मरेण
मौर्व्वीं द्वितीयामिव कार्म्मुकस्य ॥ ५५ ॥
सुगन्धिनिश्वासविवृद्धतृष्णं
विम्बाधरासन्नचरं द्विरेफम्।
प्रतिक्षणं सम्भ्रमलोलदृष्टि-
र्लीलारविन्देन[2] निवारयन्ती ॥ ५६ ॥
तां वीक्ष्य सर्व्वावयवानवद्यां
रतेरपि ह्रीपदमादधानाम्।

नाय उपयुज्यते इति भाव । नितम्बात स्रस्ता चलिता केशरदाम वकुलमाला सा एव काञ्ची तां पुन पुन अवलम्बमाना हस्तेन धारयन्ती ॥ ५५ ॥

सुगन्धीति। सुगन्धिभि निश्वासै विवृद्धतृष्णं विम्बतुल्य अधर विम्बाधर 'वृत्तौ मध्यपदलोप स्यात्' इति वामन । तस्य आसन्नचरं सन्निकृष्टचर द्विरेफ भृङ्ग प्रतिक्षण सम्भ्रमेण लोलदृष्टि चञ्चलाक्षी सती लीलारविन्देन निवारयन्ती ॥ ५६ ॥

तामिति। सर्व्वावयवेषु अनवद्याम् अगर्ह्याम 'अवद्य-पण्या' इति निपात । रते कामकलत्रस्य अपि ह्रीपद लज्जानिमित्तम आदधाना न्यूनताभावहन्तीम इत्यर्थ तां पार्व्वती वीक्ष्य पुष्पचाप काम जितेन्द्रिये दुर्ज्जये अपि इत्यर्थ शूलिनि शिवे विषये स्वकार्य्यसिद्धि पुन आशशंस चकमे। पर्व्व

१ न्यस्यते असौ इति न्यास न न्यासः न्यास कृता न्यासीकृता ताम्। अभततद्भावे च्वि ।

२ क्रीडापुष्पेन ।

शनैः कृतप्राणविमुक्तिरीशः
पर्य्यङ्कबन्धं निविडं बिभेद ॥ ५९ ॥
तस्मै शशंस प्रणिपत्य नन्दी
शुश्रूषया शैलसुतामुपेताम्।
प्रवेशयामास च भर्त्तुरेनां
भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥ ६० ॥
तस्याः सखीभ्यां प्रणिपातपूर्व्वं
स्वहस्तलूनः[१] शिशिरात्ययस्य।

भूराग यस्य स तथोक्त। वायुधारणाहितलाघवनिवृत्त्या भगवतो गुरुत्वात् इति भाव। शनैः कृता प्राणानां प्राणादिरुद्राणां विमुक्तिः पुनः सञ्चारः येन स कृतप्राणविमुक्तिः ईशः निविडं दृढं पर्य्यङ्कबन्धं वीरासनं बिभेद शिथिलीचकार ॥५९॥

तस्मा इति। अथ नन्दी तस्मै भगवते। क्रियाग्रहणात् चतुर्थी। प्रणिपत्य नमस्कृत्य शुश्रूषया सेवया निमित्तेन उपेतां सेवार्थमागताम् इत्यर्थः शैलसुतां शशंस निवेदयामास। अनु स्वामिनः भ्रूक्षेपमात्रेण भ्रूसञ्ज्ञया एव अनुमतप्रवेशाम् अङ्गीकृतप्रवेशाम् एनां शैलसुतां प्रवेशयामास च ॥ ६० ॥

तस्या इति। तस्याः पार्व्वत्याः सखीभ्यां पूर्व्वोक्ताभ्यां स्वहस्तेन लूनः उपचितः पल्लवभङ्गभिन्नः किसलयशकलमिश्रः शिशिरात्ययस्य वसन्तस्य सम्बन्धी पुष्पोच्चयः पुष्पप्रकरः 'हस्तादाने चेरस्तेये' इति घञ्विषयत्वात् कवीनामयं प्रामादिकः प्रयोग इति वल्लभः। त्र्यम्बकपादमूले प्रणिपातपूर्व्वं नमस्कारपूर्व्वकं व्यकीर्य्यत विक्षिप्तः ॥ ६१ ॥

१ लून इति लूधातोः क्तप्रत्ययः।

व्यकीर्य्यत त्र्यम्बकपादमूले
पुष्पोच्चय पल्लवभङ्गभिन्न१ ॥ ६१ ॥
उमापि नीलालकमध्यशोभि
विस्रंसयन्ती२ नवकर्णिकारम्।
चकार कर्णच्युतपल्लवेन
मूर्द्धा प्रणाम वृषभध्वजाय ॥ ६२ ॥
अनन्यभाजं पतिमाप्नुहीति
सा तथ्यमेवाभिहिता भवेन।
न हीश्वरव्याहृतय कदाचित
पुष्णन्ति लोके विपरीतमर्थम् ॥ ६३ ॥

उमापीति। उमा अपि नीलालकाना मध्ये शोभते इति तथोक्तम् अलकन्यस्तम् इत्यर्थ नवकर्णिकार विस्रंसयन्ती कर्णात च्युत पल्लव यस्य तेन मूर्द्धा वृषभध्वजाय प्रणाम चकार। क्रियाग्रहणात सम्प्रदानत्वम् ॥ ६२ ॥

अनन्येति। सा कृतप्रणामा देवी भवेन हरेण अन्या न भजति इति अनन्यभाजम। भजो ण्वि इति ण्विप्रत्यय सर्व्वनाम्नो वृत्तिमात्रे पूर्व्वपदस्य पुवद्भाव। पतिम् आप्नुहि इति तथ्य सत्यम एव अभिहिता उक्ता, उत्तरत्र तथैव सम्भवात इति भाव। अभिदधातेर्ब्रुवर्थस्य दुहादित्वादप्रधाने कर्म्मणि क्त। तथाहि, ईश्वरव्याहृतय महापुरुषोक्तय कदाचित् अपि लोके भुवने। 'लोकस्तु भुवने जने' इत्यमर। विपरीत विसंवादिनम् अर्थम् अभिधेय न पुष्णन्ति न बोधयन्ति इत्यर्थ ॥ ६३ ॥

---

१ पल्लवाना भङ्गै भिन्न।

२ शिथिलयन्ती पातयन्ती इति यावत।

कामस्तु बाणावसर प्रतीक्ष्य
पतङ्गवद्वह्निमुखं विविक्षु ।
उमासमक्षं हरबद्धलक्ष्य
शरासनज्या मुहुराममर्श ॥ ६४ ॥
अथोपनिन्ये गिरिशाय गौरी
तपस्विने ताम्ररुचा[१] करेण ।
विशोषिता भानुमतो मयूखै
मन्दाकिनीपुष्करबीजमालाम् ॥ ६५ ॥

कामस्त्विति । काम तु बाणावसर प्रतीक्ष्य उमासन्नि [illegible] पतङ्गवत् शलभवत । समौ पतङ्गशलभौ इत्यमर । 'तेन तुल्य क्रियाचेद्वति' इति वतिप्रत्यय । वह्निमुख विविक्षु प्रवेष्टुम् इच्छु । विशते सनन्ताद् उप्रत्यय । उमाया समक्षम् अक्ष्णा समीपम् उमासमक्षम् 'अव्ययीभावे शरत्प्रभृतिभ्य' इति समासान्तोऽच्प्रत्यय । हरे बद्धलक्ष्य सन शरासनस्य ज्या मौर्वी मुहु आममर्श परामृष्टवान् ॥ ६४ ॥

अथोपेति । अथ गौरी तपोऽस्यास्तीति तपस्वी 'अस्मायामेधास्रजो विनि' इति विनिप्रत्यय । तस्मै तपस्विने गिरिशाय ताम्ररुचा रक्तवर्णेन करेण भानुमत अंशुमत मयूखै विशोषिता मन्दाकिन्या पुष्कराणि पद्मानि तेषा बीजानि तेषा माला जपमालिकाम् उपनिन्ये समर्पितवती ॥ ६५ ॥

---

१ ताम्रा ताम्रस्य इव या रुक् कान्ति यस्य स तेन ।

प्रतिग्रहीतुं प्रणयिप्रियत्वात्[१]
त्रिलोचनस्तामुपचक्रमे च ।
सम्मोहनं नाम च पुष्पधन्वा
धनुष्यमोघं समधत्त बाणम् ॥ ६६ ॥

हरस्तु किञ्चित् परिलुप्तधैर्य्यः[२]
चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥ ६७ ॥

प्रतिग्रहीतुमिति । त्रिलोचनस्य प्रणयिप्रियत्वात् अर्थिप्रिय [illegible] प्रतिग्रहीतुं स्वीकर्तुम् उपचक्रमे । पुष्प धनु यस्य स पुष्पधन्वा कामस्य वा सञ्ज्ञायाम्’ इति अनङा-देश । सम्मोह्यते अनेनेति सम्मोहनं नाम । नामेति प्रसिद्धौ । अमोघं बाणं सायकं धनुषि समधत्त सहितवान ॥ ६६ ॥

हरस्त्विति । हर तु हर अपि, चन्द्रोदयारम्भे अम्बुराशि इव, किञ्चित् ईषत् परिलुप्तधैर्य्य, न तु प्राकृतजनवदत्यन्तलुप्तधैर्य्य इति भाव । बिम्बफलतुल्य अधरोष्ठ यस्य तस्मिन् उमामुखे विलोचनानि व्यापारयामास, त्रिभिरपि लोचनै साभिलाषमद्राक्षीत् इत्यर्थ, एतेन भगवतो रति भावोदय उक्त ॥ ६७ ॥

---

१ प्रणय प्राथना विद्यते यस्या सा प्रणयिनी तस्या प्रियत्वात् अभि-मतत्वात् ।

२ परिलुप्त धैर्य्य यस्य स विगतधीरभाव ।

विवृण्वती शैलसुतापि भावम्

अङ्गैः स्फुरद्बालकदम्बकल्पैः१ ।

साचीकृता चारुतरेण तस्थौ

मुखेन पर्य्यस्तविलोचनेन ॥ ६८ ॥

अथेन्द्रियक्षोभमयुग्मनेत्र

पुनर्वशित्वाद् बलवन्निगृह्य ।

हेतुं स्वचेतोविकृतेर्दिदृक्षु

दिशामुपान्तेषु ससर्ज दृष्टिम् ॥ ६९ ॥

स दक्षिणापाङ्गनिविष्टमुष्टिं

नतांसमाकुञ्चितसव्यपादम्२ ।

विवृण्वतीति । शैलसुता अपि स्फुरद्बालकदम्बकल्पैः विकसत्कोमलनीपसदृशैः पुलकितैः इत्यर्थः । ईषदसमाप्तौ कल्पप्प्रत्ययः । अङ्गैः भावं रत्याख्यं विवृण्वती प्रकाशयन्ती चारुतरेण पर्य्यस्तविलोचनेन व्रीडाविभ्रान्तनेत्रेण मुखेन असाचि साचि सम्पद्यमाना साचीकृता तिर्य्यक्कृता तिर्य्यगर्थे साचि तिर इत्यमरः । तस्थौ, ह्रिया मुखं साचीकृत्य स्थिता इत्यर्थः, न केवलं हरस्यैव देव्या अप्युदितो रतिभाव इति भावः ॥ ६८ ॥

अथेति । अथ अयुग्मानि नेत्राणि यस्य सः अयुग्मनेत्रः त्रिनेत्रः वशित्वात् जितेन्द्रियत्वात् इन्द्रियक्षोभं पूर्व्वोक्तम् इन्द्रियविकारं पुनः बलवत् दृढं निगृह्य निवार्य्य स्वचेतोविकृतेः स्वचित्तविकारस्य हेतुं कारणं दिदृक्षुः द्रष्टुम् इच्छुः दिशाम् उपान्तेषु दृष्टिं ससर्ज प्रसारयामास ॥ ६९ ॥

स इति । सः भगवान् दक्षिणापाङ्गे निविष्टा स्थिता

१ स्फुरन्ति बालकदम्बानि ईषदूनानि स्फुरद्बालकदम्बानि तैः ।

२ नतांसः नतः अंसः वाङ्कमले यस्य सः तम् ।

ददर्श चक्रीकृतचारुचाप१
प्रहर्त्तुमभ्युद्यतमात्मयोनिम्॥ ७० ॥
तपःपरामर्शविवृद्धमन्योः
भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य।
स्फुरन्नुदर्च्चि२ सहसा तृतीयात्
अक्ष्णः कृशानुः किल निष्पपात॥ ७१ ॥
क्रोधं प्रभो संहर संहरेति
यावद्गिरः खे मरुतां चरन्ति।

मुष्टिः यस्य तं नताग्रम् आकुञ्चितः सव्यपादः यस्य तम् आलीढाख्यस्थानके स्थितम् इत्यर्थः चक्रीकृतचारुचापं मण्डलीकृतसौम्यकोदण्डं प्रहर्त्तुम् अभ्युद्यतम् आत्मयोनिं मनोभवं ददर्श। आलीढलक्षणमाह यादवः, 'स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। त्रितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृती। समानौ स्यात् समपदम् आलीढं पदमग्रतः। दक्षिणं वाममाकुञ्च्य प्रत्यालीढं विपर्य्यये॥' इति॥ ७० ॥

तप इति। तपःपरामर्शेन तपस आस्कन्दनेन विवृद्धमन्योः प्रवृद्धकोपस्य भ्रूभङ्गेण दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तस्य हरस्य तृतीयात् अक्ष्णः स्फुरन् उद्दीप्यमानः उदर्च्चिः उद्गतज्वालः कृशानुः अग्निः सहसा अतर्कितम् एव। 'अतर्किते तु सहसा' इत्यमरः। निष्पपात किल निश्चक्राम खलु॥ ७१ ॥

क्रोधमिति। हे प्रभो स्वामिन्! क्रोधं संहर संहर निवर्त्तय निवर्त्तय। आपन्ने द्वे भवत इति वक्तव्यम् इति वार्त्तिकेन

१ न चक्रं चक्रं कृतं चारु मनोहरं चापं धनुः येन स तम्।
२ उद्गता अर्च्चिषः शिखा यस्य स उदर्च्चिः।

तावत् स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार ॥ ७२ ॥
तीव्राभिषङ्गप्रभवेण वृत्तिं
मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्तृव्यसना मुहूर्त्तं
कृतोपकारेव रतिर्बभूव ॥ ७३ ॥
तमाशु विघ्नं तपसस्तपस्वी
वनस्पतिं वज्र इवावभज्य।

ह्वित्वम्। सम्भ्रमेण वृत्तिस्थापनम् इति काशिका। इत्येव मरुतः देवानां गिरः वाचः खे व्योम्नि यावत् चरन्ति प्रवर्त्तन्ते तावत् तत्कालम् एव भवस्य नेत्रात् जन्म यस्य सः भवनेत्रजन्मा 'अव्ययो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः। स वह्निः मदनं भस्म एव अवशेषः यस्य तं भस्मावशेषं चकार ददाह इत्यर्थः ॥ ७२ ॥

तीव्रेति। तीव्राभिषङ्गप्रभवेण अतिदुःसहाभिभवसम्भवेन 'अभिषङ्गस्त्वभिभवे सङ्गे आक्रोशनेऽपि च' इति वैजयन्ती। इन्द्रियाणां चक्षुरादीनां वृत्तिं व्यापारं संस्तम्भयता प्रतिबध्नता मोहेन मूर्च्छया कर्त्र्या रतिः मदनभार्य्या मुहूर्त्तम् अज्ञातं भर्तृव्यसनं भर्तृनाशः यया सा तथोक्ता सती कृतोपकारा इव बभूव सहसा दुःखोपनिपातान्मुमूर्च्छ इत्यर्थः। मोहेन दुःखसंवेदनाभावात् तस्योपकारकत्वोक्तिः ॥ ७३ ॥

तमिति। तपस्वी तपोनिष्ठः भूतपतिः शिवः तपसः विघ्नम् अन्तरायभूतं तं कामम् आशु, वज्रः अशनिः वनस्पतिं वृक्षम् इव अवभज्य भङ्क्त्वा स्त्रीसन्निकर्षं स्त्रीसन्निधानं परिहर्त्तुम्

स्त्रीसन्निकर्षं परिहर्त्तुमिच्छन्[१]
अन्तर्दधे भूतपतिः सभूत ॥ ७४ ॥
शैलात्मजापि पितुरुच्छिरसोऽभिलाष
व्यर्थं समर्थ्य ललित वपुरात्मनश्च।
सख्यो समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथञ्चित ॥ ७५ ॥
सपदि[२] मुकुलिताक्षी रुद्रसरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम्।

इच्छन् तस्यानर्थहेतुत्वात् इति भाव । सभूत सगण सन् अन्तर्दधे ॥ ७४ ॥

शैलात्मजेति। शैलात्मजा पार्वती अपि उच्छिरस उन्नतशिरस महत पितु अभिलाष हरो वरोऽस्तु इति मनो रथ ललित सुन्दरम् आत्मन वपुश्च व्यर्थं निष्फल समर्थ्य विचार्य्य सख्यो समक्ष पुर इति च हेतुना अधिक जात लज्जा समानजनसमक्षमवमानस्यातिदु सहत्वात इति भाव। शून्या निरुत्साहा सती कथञ्चित कृच्छ्रेण भवनस्य अभिमुखी जगाम ॥ ७५ ॥

सपदीति। सपदि अद्रि हिमवान रुद्रस्य सरम्भात् कोपात् भीत्या। 'सरम्भ सम्भ्रमे कोपे' इति विश्व । मुकुलिताक्षी निमीलितनेत्राम्। 'बहुव्रीहौ सकथ्यक्ष्णो स्वाङ्गात् षच इति षच्प्रत्यय । षिद्गौरादिभ्यश्च' इति ङीष्। अनुकम्पितुम् अर्हाम्

१ परिहर्त्तु परित्यक्तुम्।
२ ततक्षणमेव।

सुरगज इव बिभ्रत्[1] पद्मिनी दन्तलग्ना
प्रतिपथगतिरासीत् वेगदीर्घीकृताङ्ग ॥ ७६ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
मदनदहनो नाम तृतीय सर्ग ।

अनुकम्पयाम् 'उद्दहलोर्ध्वंत' इति एतत्प्रत्यय । दुहितर दोर्भ्याम आदाय, दन्तयो लग्ना पद्मिनी नलिनी बिभ्रत् सुरगज इव, वेगेन रयेण दीर्घीकृताङ्ग आयतीकृतशरीर सन पन्थान प्रतिगता प्रतिपथा मार्गानुसारिणी गति यस्य स प्रतिपथ गति आसीत पन्थानमनुसृत्य जगाम इत्यर्थ ॥ ७६ ॥

इति श्रीमन्महामहोपाध्याय कोलाचलमल्लिनाथसूरि विरचिताया
कुमारसम्भवव्याख्याया सञ्जीवनीसमाख्यायां एकादश सर्ग ।

---

१ धारयन् । भृधातो शतृ ।

## चतुर्थ सर्ग.।

अथ मोहपरायणा सती
विवशा[1] कामबधूर्विबोधिता[2]।
विधिना प्रतिपादयिष्यता
नववैधव्यमसह्यवेदनम ॥ १ ॥
अवधानपरे चकार सा
प्रलयान्तोन्मिषिते विलोचने।

मूर्च्छिता रतिरित्युक्त सम्प्रति तद्वृत्तान्तमेवाह, अथेति। अथ अनन्तर मोह मूर्च्छा परम अयनम आश्रय यस्या सा मोहपरायणा मोहैकशरणा सती। 'परायणमभिप्रेत तत्परे परमाश्रये' इति यादव। विवशा मूढत्वात निश्चेष्टा कामबधू रति असह्या दु सहा वेदना यस्मिन् तत् तथोक्त, विधवाया गतभर्तृकाया भाव वैधव्य नव च तत् वैधव्यञ्च इति नववैधव्यम। नवग्रहण तु सहत्वद्योतनार्थम। प्रतिपादयिष्यता अनुभावयिष्यता। क्रियार्थक्रियाया लृट्। विधिना दैवेन 'विधिर्विधाने दैवे च इत्यमरः। विबोधिता वैधव्यानुभव फलोऽय विधि इति भाव। अस्मिन सर्गे वियोगिनीवृत्तानि 'विषमे ससजा गुरु समे सभरा लोऽथ गुरुर्वियोगिनी' इति लक्षणात् ॥ १ ॥

अवधानेति। सा रति प्रलयान्ते मूर्च्छावसाने। 'प्रलयो

---

१ विगत वश आयत्तता यस्या इति शेष यस्या सा।

२ विबोधिता चेतना प्रापिता।

न विवेद तयोरतृप्तयो
प्रियमत्यन्तविलुप्तदर्शनम्॥ २ ॥
अयि जीवितनाथ जीवसी-
त्यभिधायोत्थितया तया पुरः।
ददृशे पुरुषाकृति क्षितौ
हरकोपानलभस्म केवलम्॥ ३ ॥
अथ सा पुनरेव विह्वला
वसुधालिङ्गनधूसरस्तनी।

नष्टचेष्टता इत्यमरः। उन्मिषिते उन्मीलिते विलोचने अवधानं परं प्रधानं ययोः ते अवधानपरे दिदृक्षया अवहिते चकार। द्रष्टव्याभावात् तु न विवेदेत्याह, नेति प्रियं कामम् अतृप्तयोः तृप्तिं न गतयोः नित्यदिदृक्षमाणयोः इत्यर्थः, तयोः लोचनयोः दर्शनक्रियापेक्षया सम्बन्धे षष्ठी। अत्यन्तविलुप्तं दर्शनं स्वलोचनयोः करणयोः यस्य कर्मभूतस्य तम् अत्यन्त-विलुप्तदर्शनं सन्तं न विवेद न ज्ञातवती। प्रियनाशापरिज्ञानात् दिदृक्षान्तरं इति तात्पर्य्यार्थः ॥ २ ॥

अयीति। अयीति प्रश्ने। 'अयि प्रश्नानुनययोः' इति विश्वः। अयि जीवितनाथ। जीवसि प्राणिषि कच्चित्? इत्यभिधाय उत्थितया तया रत्या पुरः अग्रे क्षितौ पुरुषस्य आकृतिः इव आकृतिः यस्य तत् पुरुषाकृति केवलम् एकं हरकोपानलभस्म ददृशे दृष्टं, न तु पुरुषः इति भावः ॥ ३ ॥

अथेति। अथ भस्मदर्शनानन्तरं पुनः एव विह्वला विक्लवा वसुधालिङ्गनधूसरस्तनी वसुधालिङ्गनेन क्षितिलुण्ठनेन धूसरौ धूसरवर्णौ स्तनौ कुचौ यस्याः सा तथोक्ता। 'स्वाङ्गाच्चोपसर्ज-

विललाप विकीर्णमूर्द्धजा
समदुःखामिव[1] कुर्व्वती स्थलीम् ॥ ४ ॥
उपमानमभूद् विलासिना
करणं यत् तव कान्तिमत्तया[2]।
तदिदं गतमीदृशीं दशां
न विदीर्य्ये कठिनाः खलु स्त्रियः ॥ ५ ॥

नादसंयोगोपधात इति ङीप्। विकीर्णमूर्द्धजा विकीर्णा विक्षिप्ता मूर्द्धजाः केशा यस्याः सा तथोक्ता सा रतिः स्थलीं वनभूमिं तत्रत्यान् प्राणिन इत्यर्थः। 'जानपदकुण्डगोणस्थल' इत्यादिना ङीप्। समदुःखां स्वतुल्यशोकां कुर्व्वतीव विललाप परिदेवितवती। 'विलापः परिदेवनम्' इत्यमरः ॥ ४ ॥

उपमानमिति। तव यत् करणं गात्रम्। 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इत्यमरः। कान्तिमत्तया सौन्दर्य्येण हेतुना विलासिनां विलसनशीलानाम् 'वौ कषलस' इत्यादिना घिनुण्प्रत्ययः। उपमीयते येन तत् उपमानम् अभूत् तत् करणम् इदम् ईदृशीं दशाम् अवस्थां गतं भस्मीभूतम् इत्यर्थः। तथापि न विदीर्य्ये न विदीर्णा भवामि। कर्त्तरि लट्। तथाहि, स्त्रियः कठिनाः खलु कठिनत्वादविदीर्य्यमाणाः स्मः इत्यर्थः। कारणात् कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः। 'धीरसञ्चारिणी दृष्टिः गतिर्गौरवभाञ्जिता। स्मितपूर्व्वं तथालापः विलास इति कीर्त्तितः' ॥ ५ ॥

---

१ समदुःखां सम समानं दुःखं यस्याः सा ताम्।
२ कान्तिः लावण्यं विद्यते यस्य तत् कान्तिमत् तस्य भावः तया।

क्व नु मा त्वदधीनजीवितां¹
विनिकीर्य्य क्षणभिन्नसौहृदः² ।
नलिनीं क्षतसेतुबन्धनः³
जलसंघात इवासि विद्रुत ॥ ६ ॥
कृतवानसि विप्रियं न मे
प्रतिकूलं न च ते मया कृतम् ।

क्वेति । हे प्रिय । क्षतसेतुबन्धन भग्नसेतुबन्ध जल सङ्घात जलौघ नलिनीम् इव, जलैकायत्तजीविताम् इति शेष, त्वदधीनजीविता त्वदायत्तप्राणा मा क्व नु विनिकीर्य्य कुत्र वा निक्षिप्य क्षणभिन्नसौहृद क्षणात्यक्तसौहार्द्द सन विद्रुत पलायित असि । सेतुसौहृदयो स्थितिहेतुत्वेन साम्यम । सुहृद भाव सौहृदम । युवादित्वात् अण्प्रत्यय 'हृदयस्य हृल्लेखयदण्लासेषु इति हृदादेश, 'अणि हृद्भावात न हृद्भगसिन्ध्वन्ते पूर्ब्बपदस्य च' इति उभयपदवृद्धि हृद्भूतस्याभिधाने तूभयपदवृद्धि स्यात् यथा सुहृदो भाव सौहार्द्दम इति तदेवाह वामन, 'सौहृददौर्हृदशब्दौ अनणि हृद्भावात्' इति ॥ ६ ॥

कृतवानिति । हे प्रिय । त्व मे मम विप्रियम् अप्रिय कृत वान न असि, मया च ते तव प्रतिकूलम् अप्रिय न कृतम्, अकारण निष्कारणमेव परस्परापकारकृपकारणाभावेऽपीत्यर्थ ।

---

१ ~~त्वदे~~ त्वदि अधीन जीवित यस्या सा ताम् ।

२ सु हृदय यस्य असौ सुहृत् तस्य भाव सौहृद क्षणेन भिन्न सौहृद येन स ।

३ क्षत भग्न सेतुरेव बन्धन येन स ।

किमकारणमेव दर्शनं
विलपन्त्यै रतये न दीयते॥ ७॥
स्मरसि स्मर मेखलागुणै[1]
उत गोत्रस्खलितेषु[2] बन्धनम्।
च्युतकेशरदूषितेक्षणा-
न्यवतंसोत्पलताडनानि[3] वा॥ ८॥
हृदये वससीति मत्प्रियं
यदवोचस्तदवैमि कैतवम्।

क्रियाविशेषणमेतत। विलपन्त्यै त्वद्दर्शनार्थिन्या अपीति भाव। रतये किं कथं दर्शनं न दीयते। क्रियाग्रहणाच्चतुर्थी॥ ७॥

विप्रियमाशङ्कते, स्मरसीति। हे स्मर। गोत्रस्खलितेषु नामव्यत्यासेषु 'गोत्रं नाम्नि च स्याद्वंशे कुले' इति विश्व। मेखला गुणै बन्धनं स्मरसि उत स्मरसि वा? विकल्पे किं किमुत च' इत्यमर। च्युतकेशरै भ्रष्टकिञ्जल्कै दूषिते ईक्षणे येषु तानि अवतंसोत्पलताडनानि सधूलिक्षेपताडनानि इत्यर्थ, स्मरसि वा? अपकारस्मरणादिदमदर्शनम् इति भाव॥ ८॥

हृदय इति। हृदये वसतीति, स्मरवाक्यानुवाद। इत्थंरूप मत्प्रियं यत् अवोच उक्तवान असि। 'ब्रूञो लङि वच उम्' इति उमागम। तत् कैतवम् अवैमि मिथ्या इति मन्ये

---

१ मेखलागुणै काञ्चीदामभि।

२ गोत्रेषु नामसु स्खलितानि तेषु भ्रमेणान्यनायिकानामोच्चारणेन इत्यर्थ।

३ अवतंसोत्पलताडनानि अवतंसोत्पलै कर्णभूषणीकृतै उत्पलै ताडनानि आघाता तानि।

उपचारपदं न चेदिदं
त्वमनङ्ग कथमक्षता रतिः ॥ ९ ॥
परलोकनवप्रवासिनः
प्रतिपत्स्ये पदवीमहं तव।
विधिना जन एष वञ्चित-
स्त्वदधीनं खलु देहिनां सुखम् ॥ १० ॥
रजनीतिमिरावगुण्ठिते
पुरमार्गे घनशब्दविक्लवा[1]।

इदं वचनम् उपचारपदं परस्य रञ्जनार्थं यत् असत्यभाषणं स उपचारः तस्य पदं स्थानं कैतवस्थानम् इति यावत् न चेत् त्वम् अनङ्ग अशरीरः कथं रतिः अक्षता अविनष्टा आश्रयनाशेऽप्याश्रितमविनष्टमिति विरोधात् इति भावः ॥ ९ ॥

न च मे कश्चिद्विचारः किन्तु लोकः शोच्यते इत्याह, परलोकेति। परलोकं प्रति नवप्रवासिनः अचिरप्रोषितस्य, अनेन अनुगमनकालानतिपातः सूच्यते। तव पदवीं मार्गं प्रतिपत्स्ये त्वामनुगमिष्यामि इत्यर्थः। अतो मे नास्ति विचारः इति भावः। किन्तु विधिना दैवेन एषः जनः लोकः वञ्चितः प्रतारितः देहिनां सुखं त्वदधीनं त्वयि अधीनं खलु। अधिशब्दस्य शौण्डादित्वात् सप्तमी, शौण्डैः' इति समासः, 'अष्युत्तरपदात्' इति खप्रत्ययः। एवमन्यत्रापि। सुखप्रदाभावे कुतः सुखम् इति भावः ॥ १० ॥

तद्देवाह रजनीति। हे प्रिय। रजनीतिमिरेण अव-

[1] घनस्य मेघस्य शब्देन विक्लवा त्रस्ता।

वसतिं प्रिय कामिना प्रियाः
त्वदृते प्रापयितुं क ईश्वरः ॥ ११ ॥
नयनान्यरुणानि घूर्णयन्
वचनानि स्खलयन् पदे पदे।
असति त्वयि वारुणीमदः
प्रमदानामधुना विडम्बना ॥ १२ ॥
अवगम्य कथीकृतं वपुः
प्रियबन्धोस्तव निष्फलोदयः।

गुण्ठिते आवृते पुरमार्गे घनशब्दविक्लवा गर्ज्जितभीता प्रिया कामिना वसतिं प्रापयितुं त्वत् ऋते त्वां विना। 'अन्यारादित रर्त्ते' इत्यादिना पञ्चमी। क ईश्वरः शक्तः न कश्चित् इत्यर्थः। न हि कामान्धानां भीतिरस्ति इति भावः ॥ ११ ॥

नयनानीति। अरुणानि नयनानि घूर्णयन् भ्रमयन् पदे पदे प्रतिपदम्। वीप्सायां द्विरुक्तिः। वचनानि स्खलयन् विपर्य्यासयन् प्रमदानां वारुणीमदः मद्यमदः अधुना त्वयि असति विडम्बना अनुकृतिमात्रम्, मदनाभावे मदस्य निष्फल त्वात् इति भावः। तथा च शिशुपालबधे 'न मदो दयित सङ्गमभूषः' इति ॥ १२ ॥

अवगम्येति। हे अनङ्ग। अशरीर। प्रियबन्धोः प्रियसखस्य तव वपुः शरीरं कथीकृतम् अकथा कथा सम्पद्यमानं कृतं शब्दमात्रावशिष्टम् अवगम्य ज्ञात्वा निष्फलोदयः, उद्दीप्या भावादुद्दीपनवैफल्यम् इति भावः निशाकरः चन्द्रः बहुले

बहुलेऽपि गते निशाकर
तनुतां दुःखमनङ्ग मोक्ष्यति ॥ १३ ॥
हरितारुणचारुबन्धनः
कलपुंस्कोकिलशब्दसूचितः ।
वद सम्प्रति कस्य बाणतां
नवचूतप्रसवो गमिष्यति१ ॥ १४ ॥
अलिपङ्क्तिरनेकशस्त्वया२
गुणकृत्ये धनुषो नियोजिता ।

कृष्णपक्षे गते अपि तनुतां कार्श्यं दुःखं यथा तथा कृच्छ्रात् मोक्ष्यति, तथा वृद्धिरिति दुःखायिष्यते इत्यर्थः ॥ १३ ॥

हरितेति । हरितं च अरुणं च । 'वर्णो वर्णेन' इति तत्पुरुषः । हरितारुणं चारु बन्धनं वृन्तं पल्लवं यस्य सः तथोक्तः कलेन मधुरेण पुंस्कोकिलशब्देन पुरुषकोकिलनादेन सूचितः अनुमापितः चूतचर्व्वणकार्य्यत्वात् कलशब्दस्य इति भावः, नवचूतप्रसवः नवचूतकुसुमं सम्प्रति कस्य बाणतां शरत्वं गमिष्यति वद । अन्यस्य पुष्पबाणस्याभावात् इति भावः ॥ १४ ॥

अलीति । त्वया अनेकशः बहुशः धनुषः कार्म्मुकस्य गुणकृत्ये मौर्व्वीकार्य्ये गुणवत्कर्म्मणि च नियोजिता अधिकृता इयम् अलिपङ्क्तिः करुणस्वनैः दीनस्वनैः विरुतैः कूजितैः गुरुशोकां दुर्भरदुःखाम् 'गुरुस्तु गोष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे' इति

१ प्राप्स्यति ।

२ अलिपङ्क्तिः अलीनां भ्रमराणां पङ्क्तिः श्रेणी ।

विरुतै करुणस्वनैरियं१
गुरुशोकामनुरोदितीव माम्॥ १५ ॥
प्रतिपद्य मनोहरं२ वपु
पुनरप्यादिश तावदुत्थितः।
रतिदूतिपदेषु कोकिलां
मधुरालापनिसर्गपण्डिताम्॥ १६ ॥
शिरसा प्रणिपत्य याचिता-
न्युपगूढानि सवेपथूनि च।

शब्दार्णवे। माम् अनुरोदिति इव। उपसर्गात् सकर्म्मकत्वम्, रुदादिभ्य सार्व्वधातुके' इति इडागम ॥ १५ ॥

प्रतिपद्येति। तावत् पुनरपि मनोहर वपु शरीर प्रति ण्य प्राप्य उत्थित सन मधुरालापेषु प्रियोक्तिषु निसर्गपण्डिता स्वभावप्रगल्भा कोकिला रतिदूतिपदेषु सुरतदूतीस्थानेषु आदिश आज्ञापय, प्रगल्भानामेव दौत्याधिकार इति भाव। ङीबन्तस्यापि दूतीशब्दस्य छन्दोभङ्गभयात् ह्रस्व। 'अपि माष म िकुर्य्यात छन्दोभङ्गं त्यजेद्गिरम्' इति केचित्। 'उणादयो बहुलम्' इति बहुलग्रहणात् ह्रस्व इति वल्लभ ॥ १६ ॥

शिरसेति। हे स्मर। शिरसा प्रणिपत्य याचितानि सवेप थूनि सकम्पानि 'ट्वितोऽथुच्' इति अथुच्प्रत्यय। सात्त्विकान्त-रोपलक्षणमेतत्, 'स्तम्भप्रलयरोमाञ्चा स्वेदो वैवर्ण्यवेपथू। अश्रु वैस्वर्य्यमित्यष्टौ सात्विका परिकीर्त्तिता ॥' इति। उपगूढानि आलिङ्गनानि च। नपुसके भावे क्त। तानि अनुभूतप्रकाराणि

१ करुणस्वनै करुण स्वन यषां तानि तै।

२ मन हरति यत मनोहर सुन्दरम इति यावत।

सुरतानि च तानि ते रह
 स्मर संस्मृत्य न शान्तिरस्ति मे ॥ १७ ॥
रचितं रतिपण्डित त्वया
 स्वयमङ्गेषु ममेदमार्त्तवम्।
ध्रियते कुसुमप्रसाधन
 तव तच्चारु वपुर्न दृश्यते ॥ १८ ॥
विबुधैरसि यस्य दारुणै
 असमाप्ते परिकर्म्मणि स्मृत ।
तमिमं कुरु दक्षिणेतर
 चरणं निर्मितरागमेहि[1] मे ॥ १९ ॥

रह एकान्ते सुरतानि च संस्मृत्य मे शान्ति नास्ति। अत्र समानकर्तृकत्व दुर्घट समानक्रियापेक्षास्तीति केचित्॥ १७॥

रचितमिति। हे रतिपण्डित। रतिकुशल। त्वया मम अङ्गेषु अवयवेषु स्वयं रचितम् ऋतु अस्य प्राप्त आर्त्तव वासन्तम् 'ऋतोरण्' इति अण्प्रत्यय। कुसुमप्रसाधन पुष्पाभरणम इदम ध्रियते अवतिष्ठते। 'धृञ् अवस्थाने इति धातो स्तौदादिकात कर्त्तरि लट्। तव तत् प्रसाधक चारु सुन्दर वपस्तु न दृश्यते॥ १८॥

विबुधैरिति। दारुणे क्रूरे प्राणान्तिके कर्म्मणि नियोगात इति भाव। विबुधै देवै, अनभिज्ञत्वञ्च ध्वन्यते यस्य मच्चरणस्य परिकर्म्मणि प्रसाधने 'परिकर्म्म प्रसाधनम' इत्यमर। असमाप्ते सति स्मृत अभि तम इमम दक्षिणेतर वाम मे चरण निर्मितराग रचितलाक्षाराग कुरु एहि आगच्छ॥ १९

[1] निर्मितराग निर्मित राग यस्मिन स तम्।

अहमेत्य पतङ्गवर्त्मना
पुनरङ्काश्रयिणी भवामि ते।
चतुरैः सुरकामिनीजनैः
प्रिय यावन्न विलोभ्यसे दिवि ॥ २० ॥

मदनेन विनाकृता रतिः
क्षणमात्रं किल जीवितेति मे।
वचनीयमिदं व्यवस्थितं
रमण त्वामनुयामि यद्यपि ॥ २१ ॥

क्रियतां कथमन्त्यमण्डनं
परलोकान्तरितस्य ते मया।

अहमिति। अहं पतङ्गवर्त्मना शलभमार्गेण अग्निप्रवेशेन इत्यर्थः 'पतङ्गः शलभे चाग्नौ मार्त्तण्डेऽर्के शरे खगे' इति वैजयन्ती। एत्य आगत्य पुनः ते अङ्काश्रयिणी उत्सङ्गवर्त्तिनी भवामि सम्प्रत्येव भविष्यामि। 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा' इति लट्। हे प्रिय! दिवि स्वर्गे चतुरैः सुरकामिनीजनैः अप्सरोगणैः यावत् न विलोभ्यसे विलोभयिष्यसे। 'यावत्पुरानिपातयोर्लट्' इति लट् ॥ २० ॥

मदनेनेति। हे रमण! त्वाम् अनुयामि यद्यपि अनुगमिष्यामि एव 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा' इति लट्। 'यद्यपीत्यवधारणे' इति केशवः। किन्तु रतिः मदनेन विनाकृता वियोजिता सती इत्यर्थः 'सुप्सुपा' इति समासः। क्षणमात्रं जीविता किल इति इदं वचनीयं निन्दा मे मम व्यवस्थितं स्थिरम् अभूत् ॥ २१ ॥

क्रियतामिति। परलोके अन्तरितस्य व्यवहितस्य मृतस्य

समामेव गतोऽस्यतर्किताम्
गतिमङ्गेन च जीवितेन च ॥ २२ ॥
ऋजुतां नयतः स्मरामि ते
शरमुत्सङ्गनिषण्णधन्वनः ।
मधुना सह सस्मितां कथां
नयनोपान्तविलोकितञ्च यत् ॥ २३ ॥
क्व नु ते हृदयङ्गमः सखा
कुसुमायोजितकार्म्मुको मधुः ।

इत्याह ते तव मया अलङ्कारमण्डनं कथं केन प्रकारेण क्रियताम्। क्रियतामित्यत्र कामचारे लोट्, दृतदग्धस्य ते यथेच्छमण्डन-
[illegible]
एव अतर्किताम् अविचारितां गतिं गतः असि, इह मृतशरीरमपि नास्ति कस्य मण्डनम् इति भावः ॥ २२ ॥

ऋजुतामिति। शरम् ऋजुताम् आर्जवं नयतः उत्सङ्गे निषण्णम् अङ्कगतं धनुः यस्य तस्य 'धनुषश्च' इति अनङादेशः। ते तव मधुना वसन्तेन सह 'मधुः। दैत्य चैत्रे वसन्ते च' इति विश्वः। सस्मितां कथाम् आलापं तथा यत् नयनोपान्तविलोकितम् अपाङ्गवीक्षणं, ते इत्यनुषङ्गः, तच्च स्मरामि ॥ २३ ॥

क्व न्विति। हृदयं गच्छतीति हृदयङ्गमः 'हृदा खच् प्रकरणे गमेः सुप्युपसंख्यानम्' इति खच्प्रत्ययः, 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः। ते तव सखा कुसुमैः आयोजितम् आरचितं कार्म्मुकं येन कार्म्मुकनिर्म्माता मधुः वसन्तः क्व नु कां वा गतः इति शेषः। अथवा सः अपि उग्ररुषा तीव्रकोपेन पिनाकिना ईश्वरेण सुहृदा मदनेन गतां प्राप्तां गतिं भस्मताम्

न खलूग्ररुषा पिनाकिना
गमित सोऽपि सुहृद्गता गतिम्॥ २४॥
अथ तै परिदेविताचरै
हृदये दिग्धशरैरिवाहत ।
रतिमभ्युपपत्तुमातुरा
मधुरात्मानमदर्शयत् पुर ॥ २५ ॥
तमवेच्य रुरोद सा भृश
स्तनसम्बाधमुरो जघान च।
स्वजनस्य हि दु खमग्रत.
विवृतद्वारमिवोपजायते ॥ २६ ॥

इत्यथ न गमित खलु न प्रापित किम्? जिज्ञासानुनय खल इत्यमर ॥ २४ ॥

अथेति। अथ तै परिदेविताचरै विलापवचनै हृदय दिग्धशरै विषलिप्तमुखशरै इव आहत सन 'विषाक्ते दिग्ध लिप्तकौ' इत्यमर । मधु वसन्त आतुराम् आपन्ना रतिम् अभ्युपपत्तम् अनुग्रहीतुम् आश्वासयितुम् इत्यर्थ 'अभ्युप पत्तिरनुग्रह' इत्यमर । आत्मान पुर अदर्शयत् आविर भूत इत्यर्थ ॥ २५ ।

तमिति। सा रति त मधुम् अवेच्य दृष्ट्वा भृश रुरोद स्तनौ सम्बाध स्तनसम्बाधम। 'परिक्लिश्यमाने च' इति णमुल्। उर जघान ताडितवती च। तथाहि, स्वजनस्य अग्रत दु ख विवृतम् अपसारित द्वार कवाट यस्य तत् इव उपजायते आविर्भवति उच्छृङ्खल प्रवर्त्तते इति उत्प्रेक्षाभिप्राय ॥ २६ ॥

इति चैनमुवाच दुःखिता
　　सुहृदः पश्य वसन्त किं स्थितम्[1] ।
तदिदं कणशो विकीर्य्यते
　　पवनैर्भस्म कपोतकर्वुरम् ॥ २७ ॥

अयि सम्प्रति देहि दर्शनं
　　स्मर पर्य्युत्सुक एष माधवः ।
दयितास्वनवस्थितं नृणां
　　न खलु प्रेम चलं सुहृज्जने ॥ २८ ॥

इतीति । दुःखम् अस्याः सञ्जातं दुःखिता सञ्जातदुःखा इत्यर्थः । तारकादित्वादितच् । सा रतिः एनं वसन्तम् इति उवाच च । चकारः पूर्व्वोक्तसमुच्चयार्थः । हे वसन्त ! पश्य सुहृदः त्वत्सख्युः किं स्थितं किम् उपस्थितम् । तत् इदं कपोतकर्वुरं पारावतशवलं कणशः चूर्णीभूतम् अल्पार्थाच्छस्प्रत्ययः । भस्म पवनैः विकीर्य्यते विक्षिप्यते पश्य भस्मीभूतस्ते सुहृत् इत्यर्थः ॥ २७ ॥

अयीति । अयि स्मर ! सम्प्रति दर्शनं देहि, एष माधवः वसन्तः पर्य्युत्सुकः त्वद्दर्शनोत्कण्ठितः । त्वामप्यनाहूतवतोऽस्य को माधवः इत्याशङ्क्याह, नृणां पुरुषाणां दयितासु प्रेम अनवस्थितम् अस्थिरं चलम् इत्यर्थः, सुहृज्जने प्रेम तु न चलं खलु ॥ २८ ॥

1 अवशिष्टम् ।

अमुना ननु पार्श्ववर्त्तिना१
जगदाज्ञां ससुरासुर तव।
बिसतन्तुगुणस्य२ कारित
धनुष पेलवपुष्पपत्त्रिण.॥ २९॥
गत एव न ते निवर्त्तते
स सखा दीप इवानिलाहत३।
अहमस्य दशेव पश्य माम्
अविषह्यव्यसनेन धूमिताम्॥ ३०॥

ईदृशा सुहृद कति न सन्तीत्याशङ्का न कोऽपीत्याह, अमुनेति। ननु मदन। पार्श्ववर्त्तिना सहचरेण अमुना वस न्तेन ससुरासुर सुरासुरसहित जगत बिसतन्तुगुणस्य मृणाल-सूत्रमौर्वीकस्य पेलवानि कोमलानि पुष्पाणि एव पत्त्रिण बाणा यस्य तस्य तव धनुष आज्ञा कारित जगताज्ञा कारिता इत्यर्थ 'हृक्रोरन्यतरस्याम' इति जगत कर्म्मत्वम॥ २९॥

गत इति। स ते सखा अनिलाहत वायुताडित दीप इव गत एव न निवर्त्तते अहमस्य दीपायमानस्य दशा वर्त्ति इव तिष्ठामि इति शेष। 'दशा वर्त्तावत्रस्थाया वस्त्रान्ते स्युर्दशा अपि' इति विश्व। कुत? अविषह्यव्यसनेन सोढुम अशक्याद् दुःखप्रकर्षेण धूमिता सञ्जातधूमां मा पश्य धूमवत्त्वान्नष्टदीपदशासाम्य धूमस्य व्यसनमेव इत्यर्थ॥ ३०॥

१ पार्श्वे वर्त्तते य स तेन।

२ बिसतन्तु मृणालसूत्र गुण यस्य त तस्य।

३ अनिलाहत अनिलेन वायुना आहत। आङ्पूर्वात् हन धातो कर्म्मणि क्त।

विधिना कृतमर्द्धवैशस
ननु मां कामबधे विमुञ्चता।
अनपायिनि संश्रयद्रुमे
गजभग्ने पतनाय वल्लरी ॥ ३१ ॥
तदिदं क्रियतामनन्तरं
भवता बन्धुजनप्रयोजनम्।
विधुरां ज्वलनातिसर्ज्जनात्[१]
ननु मां प्रापय पत्युरन्तिकम् ॥ ३२ ॥

विधिनेति। नन वसन्त! कामबधे मदनबधे मां विमुञ्चता वर्ज्जयता अमारयता इत्यर्थ विधिना दैवेन विशसति हिनस्ति इति विशस घातुक। पचाद्यच्। विशसस्य कर्म्म वैशसम्। युवादित्वादण्प्रत्यय। अर्द्धवैशसम् अर्द्धबध कृतम् 'अर्द्धो वा एष आत्मनो यत पत्नी' इति श्रुते। पत्यु स्वस्य च आश्रयाश्रयिभूतयोरेकपदार्थत्वाभिप्रायेणार्द्धोक्ति। तथा च गजेशबधे देशान्तरस्यापि बधनियमनान्मामपि विधिरघ्नन्नेव हतवानिति तात्पर्य्यम। एतदेवोपपादयति, अनपायिनि अनपायित्वेन विश्वस्ते संश्रयद्रुमे आश्रयवृक्षे गजभग्ने सति वल्लरी लता पतनाय भवति इति शेष। पतितुमेव सालम इत्यर्थ। 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ॥ ३१ ॥

सम्प्रत्यनन्तरकर्त्तव्य प्रार्थयते, तदिति। तत तस्मात् कारणात उक्तप्रकारेण अन्यथापि मरणस्यावश्यम्भावात इत्यर्थ। अनन्तर भवता इद वक्ष्यमाण बन्धुजनप्रयोजन बन्धुकृत्य क्रियताम्। प्रार्थनाया लोट्। तदेवोपदिशति, ननु वसन्त।

१ ज्वलनस्य ज्वलने वा अतिसर्जन तस्मात्।

शशिना सह याति कौमुदी
सह मेघेन तडित् प्रलीयते।
प्रमदा पतिवर्त्मगा इति
प्रतिपन्नं हि विचेतनैरपि॥ ३३॥
अमुनैव कषायितस्तनी
सुभगेन प्रियगात्रभस्मना[१]।
नवपल्लवसंस्तरे[२] यथा
रचयिष्यामि तनुं विभावसौ॥ ३४॥

विधुरा विवशा सा ज्वलनातिसर्जनात अग्निदानात् पत्युः अन्तिकं प्रापय अग्निप्रवेशनं कारय इत्यर्थः॥ ३२॥

कर्त्तव्यस्यायमर्थः स्त्रीणामित्याह, शशिनेति। कौमुदी चन्द्रिका शशिना सह याति शशिनि अस्तमिते स्वयं नश्यति इत्यर्थः। तडित् सौदामनी मेघेन सह प्रलीयते प्रणश्यति। कर्त्तरि लट्। प्रमदाः स्त्रियः पतिवर्त्म गच्छन्ति इति पतिवर्त्मगाः पतिमार्गानुगामिन्य इति एतत् विचेतनैः अल्पचेतनैः अविवेकिभिरपि इत्यर्थः प्रतिपन्नं ज्ञातम्। 'अनुदरा कन्या' इतिवत् अल्पत्वाभिप्रायेण विचेतनैरपीति निर्देशः। नाथस्तु पृथग्जनैरिति पपाठ। पतिवर्त्मगा इत्यत्र स्मृतिः, 'आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता॥' इति॥ ३३॥

अमुनैवेति। अमुना परोवर्त्तिना सुभगेन शोभनेन प्रियगात्रभस्मना एव। एवकारो मण्डनान्तरनिवृत्त्यर्थः। कषा-

---

१ प्रियस्य गात्रं शरीरं तस्य भस्म तेन।

२ नवपल्लवानि एव नवपल्लवानां वा संस्तरं तस्मिन्।

कुसुमास्तरणे सहायतां
बहुश सौम्य गतस्त्वमावयो ।
कुरु सम्प्रति तावदाशु मे
प्रणिपाताञ्जलियाचितश्चिताम् ॥ ३५ ॥
तदनु ज्वलन मदर्पित
त्वरयेर्दक्षिणवातवीजनै ।
विदित खलु ते यथा स्मर
क्षणमप्युत्सहते न मां विना ॥ ३६ ॥
इति चापि विधाय दीयता
सलिलस्याञ्जलिरेक एव नौ।

यितस्तना रञ्जितस्तना राग ... कषायो ... निर्यासे सौरभे रसे' इति वैजयन्ती। नवपल्लवसस्तरे यथा नवपल्लवतल्पे इव

कुसुमेति। हे सौम्य। साधो। त्वम् आवयो रतिपञ्च बाणयो बहुश बहुवार कुसुमास्तरणे पुष्पशयने सहायता गत । सम्प्रति प्रणिपाताञ्जलिना याचित अञ्जलिपूर्व्वक प्रार्थित सन इत्यर्थ आशु मे चिता काष्ठचय कुरु कुरुष्व, यथेह तथामुत्रोपकर्त्तव्य मित्रेण इत्यर्थ ॥ ३५ ॥

तदिति। तत चिताकरणम् अन अनन्तर मयि अर्पित मदर्पित ज्वलनम अग्नि दक्षिणवातवीजनै मलयमारुतसञ्चालनै त्वरये त्वरित ज्वलय इत्यर्थ । त्वराहेतुमाह, ते तव विदित खलु 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्त्तमाने क्त तद्योगात कर्त्तरि षष्ठी। यथा येन प्रकारेण स्मर मा विना क्षणम अपि न उत्सहते न हृष्यति तथा त्वया ज्ञातमेव इत्यर्थ ॥३६॥

इतीति। अपि च इति एव विधाय कृत्वा नौ आवा-

अविभज्य[1] परत्र त मया
सहित पास्यति ते स बान्धव. ॥ ३७ ॥
परलोकविधौ च माधव
स्मरमुद्दिश्य विलोलपल्लवा ।
निवपे सहकारमञ्जरी
प्रियचूतप्रसवो हि ते सखा ॥ ३८ ॥
इति देहविमुक्तये स्थिता
रतिमाकाशभवा सरस्वती ।
शफरीं ह्रदशोषविक्लवा[2]
प्रथमा वृष्टिरिवान्वकम्पयत् ॥ ३९ ॥

श्याम् एक एव सलिलस्य अञ्जलि दीयताम् तम अञ्जलि स ते बान्धव सखा स्मर परत्र परलोके मया सहित अविभज्य

परलोकेति । किं च, हे माधव । वसन्त । परलोकविधौ पिण्डोदकादिकर्म्मणि स्मरम उद्दिश्य विलोला पल्लवा यासु ता सहकारमञ्जरी चूतवल्लरी निवपे देहि, हि यस्मात कारणात् ते सखा स्मर प्रिया चूतप्रसवा यस्य स तथोक्त ॥ ३८ ॥

इतीति । इति देहस्य विमुक्तये शरीरस्य विसर्गाय स्थिता कृतनिश्चयाम इति यावत रतिम आकाशभवा सरस्वती अशरीरा वाक् ह्रदशोषविक्लवा ह्रदस्यजलाधारस्य शोषेण विक्लवा शफरी प्रोष्ठीम प्रोष्ठी तु शफरी द्वयो इत्यमर । प्रथमा

१ विभागम् अकृत्वा एव ।

२ विक्लवा कातराम ।

कुसुमायुधपत्नि दुर्लभ
  तव भर्त्ता न चिराद्भविष्यति।
शृणु येन स कर्म्मणा गत
  शलभत्व हरलोचनार्च्चिषि ॥ ४० ॥
अभिलाषमुदीरितेन्द्रिय.१
  स्वसुतायामकरोत् प्रजापति ।
अथ तेन निगृह्य विक्रियाम्
  अभिशप्त फलमेतदन्वभूत् ॥ ४१ ॥

त्वष्टि वर्षम इव अन्वकम्पयत् अनुकम्पितवती सदयम उवाच इत्यर्थ । कृपा दयानकम्पा स्यात' इत्यमर ॥ ३९ ॥

कुसुमेति। हे कुसुमायुधपत्नि।ते तव भर्त्ता चिरात चिर दुर्लभ न भविष्यति किन्त्वचिरमेव सुलभो भविष्यति इत्यर्थं । किं च, शृण तत् कर्म्म इति शेष, येन कर्म्मणा स ते भर्त्ता हरलोचनस्य अर्च्चि ज्वाला ज्वाला। भासो न पुस्यर्च्चि' इत्यमर । तस्मिन शलभत्व पतङ्गत्व गत समौ पतङ्गशलभौ' इत्यमर ॥ ४० ॥

तदेव कर्म्मोपाचष्टे, अभिलाषमिति। उदीरितेन्द्रिय प्ररितेन्द्रिय स्मरेण इति शेष, प्रजापति ब्रह्मा स्वसुताया सरस्वत्याम ष्भिलाषम अनुरागम अकरोत। अथ तेन प्रजापतिना विक्रियाम इन्द्रियविकार निगृह्य निरुध्य अभिशप्त मन एतत फल दाहात्मक स्वकर्म्मफलम् अन्वभूत् ॥ ४१ ॥

२ उदीरित प्रेरितम् उद्दीपितम् इति यावत इन्द्रिय यस्य स ।

परिणेष्यति पार्व्वती यदा
तपसा तत्प्रवणीकृतो हरः।
उपलब्धसुखस्तदा स्मरं
वपुषा स्वेन नियोजयिष्यति॥ ४२॥
इति चाह स धर्म्मयाचितः
स्मरशापावधिदां सरस्वतीम्।
अशनेरमृतस्य[1] चोभयो-
र्वशिनश्चाम्बुधराश्च[2] योनयः॥ ४३॥ युग्मकम्।
तदिदं परिरक्ष शोभने
भवितव्यप्रियसङ्गमं वपुः।

शापावधिरपि तेनैवोक्त इत्याह श्लोकद्वयेन, परिणेष्यतीत्यादिना। धर्म्मेण धर्म्माख्यप्रजापतिना याचितः प्रार्थितः स भगवान् ब्रह्मा तपसा कारणेन तस्यां पार्व्वत्यां प्रवणीकृतः अभिमुखीकृतः हरः शिवः यदा पार्व्वतीं परिणेष्यति उद्वक्ष्यति तदा उपलब्धसुखः प्राप्तानन्दः सन् स्मरं कामं स्वेन वपुषा नियोजयिष्यति सङ्गमयिष्यति इति एवं स्मरशापस्य अवधिदां अवसानदायिनीं सरस्वतीं वाचं च आह एव शापावधिमप्युक्तवान् इत्यर्थः। ननु तथा क्रुद्धस्य कथमेवं इति शङ्कित्वा आह, वशिनः जितेन्द्रियाश्च अम्बुधराश्च अशनेः अमृतस्य च इत्युभयोः योनयः प्रभवाः। वशिपक्षे अशन्यमृतशब्दौ कोपप्रसादपरौ अन्यत्र वैद्युतोदकपरौ (युग्मकम्)॥ ४२॥ ४३॥

तदिति। हे शोभने! ततः तस्मात् कारणात् भवितव्य-

---

१ अशने रमृतस्य।

२ अम्बुधराः अम्बु जलं धरन्ति ये ते अम्बुधराः मेघाः।

रविपीतजला[१] तपात्यये
पुनरोघेन हि युज्यते नदी ॥ ४४ ॥
इत्थं रतेः किमपि भूतमदृश्यरूपं[२]
मन्दीचकार मरणव्यवसायबुद्धिम्।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेनाम्
आश्वासयत्[३] सुचरितार्थपदैर्वचोभिः ॥४५॥

भविष्यन् प्रियसङ्गमः यस्य तत् तथोक्तम् इदं वपुः परिरक्ष तथा हि रविपीतजला नदी तपात्यये प्रावृषि 'प्रावृट् तपात्यय' इति हलायुधः। पुनः ओघेन प्रवाहेण युज्यते सङ्गच्छते हि ॥ ४४ ॥

इत्थमिति। इत्थम् अनेन प्रकारेण अदृश्यरूपं किमपि भूतं कश्चित् प्राणी। 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु' इत्यमरः। रतेः मदनदाराणां मरणव्यवसायबुद्धिं मरणोद्योगबुद्धिं मन्दीचकार निवारयामास इत्यर्थः। 'मूढाल्पापटुनिर्भाग्यामन्दाः' इत्यमरः। अथ कुसुमायुधबन्धुः वसन्तश्च तत्प्रत्ययात् तस्मिन् भूते विश्वासात् 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। एनां रतिं सुष्ठु चरितार्थानि पदानि येषां तैः वचोभिः वाक्यैः आश्वासयत् सर्व्वथा ते देवताप्रसादात् प्रियसङ्गमो भविष्यतीत्यादिवचनैरस्या दुःखमपाचकार इत्यर्थः ॥ ४५ ॥

१ रविणा सूर्य्येण पीतं शोषितम् इत्यर्थः जलं यस्याः सा।

२ अदृश्यरूपम् अदृश्यं रूपं यस्य तत् अशरीरम्।

३ आश्वासयत् सान्त्वयामास।

अथ मदनवधूरुपप्लवान्तं
व्यसनकृशा परिपालयाम्बभूव ।
शशिन इव दिवातनस्य लेखा
किरणपरिक्षयधूसरा प्रदोषम् ॥ ४६ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
रतिविलापो नाम चतुर्थः सर्गः ।

अथेति । अथ अनन्तरं व्यसनेन दुःखेन कृशा मदनवधू रतिः उपप्लवान्तं विपदवधिं किरणपरिक्षयेण धूसरा मलिना दिवातनस्य दिनभवस्य 'सायञ्चिरम्' इत्यादिना ट्युप्रत्ययः । शशिनः चन्द्रस्य लेखा प्रदोषं रात्रिम् इव, परिपालयाम्बभूव प्रतीक्षाञ्चक्रे । पुष्पिताग्रावृत्तम् 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ ४६ ॥

इति श्रीमन्महामहोपाध्याय-कोलाचलमल्लिनाथसूरि विरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां चतुर्थः सर्गः ।

# पञ्चम सर्ग ।

तथा समक्षं दहता मनोभवं
पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्वती
प्रियेषु सौभाग्यफला हि चारुता ॥ १ ॥
इयेष सा कर्त्तुमवन्ध्यरूपता[१]
समाधिमास्थाय तपोभिरात्मन ।

तथेति । पर्व्वतस्य अपत्य स्त्री पार्वती तथा तेन प्रकारेण अस्या समीपे समक्ष पुरत 'अव्यय विभक्तिसमीपसमृद्धि' इत्यादिना अव्ययीभाव । मनोभव मन्मथ दहता भस्मीकुर्व्वता पिनाकिना ईश्वरेण भग्न खण्डित मनोरथ अभिलाष यस्या सा तथोक्ता सती हृदयेन मनसा रूप सौन्दर्य्य निनिन्द धिक् मे रूप, यत हरमनोहरणाय नालम इति गर्हितवती इत्यर्थ । युक्तञ्चैतदित्याह, तथा हि चारुता सौन्दर्य्य प्रियेषु पतिषु विषये सौभाग्य प्रियवाल्लभ्य फल यस्या सा तथोक्ता । सौन्दर्य्यस्य तदेव फल यद्भर्तृसौभाग्य लभ्यते नोचेत् विफल तत इति भाव । अस्मिन् सर्गे वंशस्थ वृत्तम, 'जतौ तु वंशस्थ मदीरित जरौ' इति लक्षणात् ॥ १ ॥

इयेषेति । सा पार्व्वती समाधिम् एकाग्रताम आस्थाय

१ आत्मन स्वस्य अवन्ध्य रूप यस्य स तस्य भाव सा ता कर्त्तुम आत्मानम अवन्ध्यरूप कर्त्तुम् इत्यर्थ तपसा शिव सन्तोष्य त पतित्वेन लब्ध्वा आत्मन सौन्दर्य्यस्य सफलता सम्पादयितुम् इति विवृतार्थ ।

अवाप्यते वा कथमन्यथा द्वयं
तथाविधं प्रेम पतिश्च तादृशः॥ २॥
निशम्य चैनां तपसे कृतोद्यमां१
सुतां गिरीशप्रतिसक्तमानसाम्२।

अवलम्ब्य तपोभि वक्ष्यमाणनियमे करणभूते आत्मन स्वस्य अवन्ध्यरूपता सफलसौन्दर्य्यं कर्त्तुम इयेष इच्छति स्म तपसा शिव वशीकर्त्तुमद्युक्ता इत्यर्थ । अन्यथा ततोऽन्यप्रकारेण कथ वा तत द्वयम अवाप्यते। किं तद द्वयम ? तथाभूता विधा प्रकार यस्य तत तथाविध प्रेम स्नेह येनार्द्धाङ्गहरा भवेत इति भाव, तादृश पतिश्च यो मृत्युञ्जय इति भाव । द्वयमेव खलु स्त्रीणामपेक्षित यद्भर्त्तृवाल्लभ्य जीवद्भर्त्तृकत्वञ्चेति तच्च तपश्चर्य्यैकसाध्यमिति निश्चिकाय इत्यर्थ । अत मन, 'यद् दुष्कर यद् दुराप यद दुर्गं यच्च दुस्तरम। तत सर्व्वं तपसा प्राप्य तपो हि दुरतिक्रमम॥ इति॥ २॥

निशम्येति। मेना मेनका च गिरीशप्रतिसक्तमानसा हरासक्तचित्ता तपसे तपश्चरणाय कृतोद्यमा कृतोद्योगा सुता निशम्य श्रुत्वा एना पार्व्वती वक्षसा परिरभ्य आलिङ्ग्य महत मुनिव्रतात् तपस निवारयन्ती उवाच। मुनिव्रतादित्यत्र यद्यपि मुनिव्रतस्य मेनकाया अनीप्सितत्वात् वारणार्थानामीप्सित इति नापादानत्व तथापि कृतोद्यमामिति मानसप्रवेशोक्तत्वात 'ध्रुवमपायेऽपादानम इति अपादानत्वमेव स्यात।

१ कृत उद्यम यया सा ताम।

२ गिरे कैलासस्य ईश नाथ तस्मिन (शिवे) प्रतिसक्त मानस यस्या सा ताम।

उवाच मेना परिरभ्य वक्षसा
निवारयन्ती महतो१ मुनिव्रतात् ॥ ३ ॥
मनीषिता सन्ति गृहेषु देवता
तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्रिणः२ ॥ ४ ॥
इति ध्रुवेच्छामनुशासती३ सुतां
शशाक मेना न नियन्तुमुद्यमात् ।

यथाह भाष्यकारः, 'यच्च मिथ्या सम्प्राप्य निवर्त्तते तच्च 'ध्रुवमपायेऽपादानमिति प्रसिद्धम्' ॥ ३ ॥

सामान्यनिषेधमुक्त्वा विशेषनिषेधमाह, मनीषिता इति । हे वत्से । मनस ईषिता इष्टा मनीषिता । शकन्ध्वादित्वात् साधुः । देवताः शच्यादयः गृहेषु सन्ति त्वं ता आराधय इति शेषः । तपः क्व ? तव इदं तावकम् । 'युष्मदस्मदोरन्यतरस्यां खञ् च' इति अण्प्रत्ययः, 'तवकममकावेकवचने इति तवकादेशः । वपुश्च क्व ? तथा हि, पेलवं मृदुलं शिरीषपुष्पं भ्रमरस्य भृङ्गस्य पदं पदस्थितिं सहेत, पतत्रिणः पुनः पक्षिणः तु पदं न सहेत अतिसौकुमार्य्याद् दिव्योपभोगयोग्यं ते वपुर्न दारुणातपःक्षमम् इत्यर्थः। अत्र दृष्टान्तालङ्कारः ॥ ४ ॥

इतीति। इति एवम् अनुशासती उपदिशन्ती मेना

१ कठोरात् ।

२ पतत्, पतनात् त्रायन्ते यानि तानि पतत्त्राणि पक्षाः । त्रैधातो कर्त्तरि ड । पतत्त्राणि विद्यन्ते येषां ते पतत्त्रिणः । अस्त्यर्थे इन् ।

ध्रुवेच्छा ध्रुवा इच्छा यस्याः इति बहुव्रीहिः ।

क ईप्सितार्थस्थिरनिश्चय मन
पयश्च निम्नाभिमुखं प्रतीपयेत् ॥ ५ ॥
कदाचिदासन्नसखीमुखेन सा
मनोरथज्ञ पितर मनस्विनी ।
अयाचतारण्यनिवासमात्मन
फलोदयान्ताय तप समाधये ॥ ६ ॥
अथानुरूपाभिनिवेश-तोषिणा
कृताभ्यनुज्ञा[१] गुरुणा गरीयसा ।

धृवेच्छा स्थिरव्यवसाया सुता पार्व्वतीम् उद्यमात् उद्योगात तपोलक्षणात् नियन्त निवारयितु न शशाक समर्था न अभूत्। तथा हि, ईप्सितार्थे स्थिरनिश्चय मन निम्नाभिमुख पयश्च क प्रतीपयेत प्रतिकूलयेत् प्रतिनिवर्त्तयेत् इत्यर्थ , निम्नप्रवण पय इव इष्टार्थाभिनिविष्ट मनो दुर्वारम् इति भाव । अत्र दीपकानुप्राणितोऽयमर्थान्तरन्यासालङ्कार ॥ ५ ॥

कदाचिदिति । अथ कदाचित् मनस्विनी स्थिरचित्ता सा पार्व्वती मनोरथज्ञम् अभिलाषाभिज्ञ पितर हिमवन्तम् आसन्न सखी आप्तसखी सा एव मुखम् उपाय 'मुख नि सरणे वक्त्रे प्रारम्भोपाययोरपि' इति विश्व । तेन फलोदय फलोत्पत्ति अन्त अवधि यस्य तस्मै तप समाधये तपोविषयमार्थम् आत्मन स्वस्य अरण्यनिवास वनवासम् अयाचत । 'दुह्याच्' इत्यादिना द्विकर्म्मकत्वम् ॥ ६ ॥

अथेति । अथ गौरी अनुरूपेण योग्येन अभिनिवेशेन आग्रहेण तुष्यति इति तथोक्तेन गरीयसा पूज्यतरेण गुरुणा

१ कृता दत्ता इत्यर्थ अभ्यनुज्ञा यस्यै सा ।

प्रजासु पश्चात् प्रथितं तदाख्यया
जगाम गौरीशिखरं शिखण्डिमत्[१] ॥७॥
विमुच्य सा हारमहार्य्यनिश्चया[२]
विलोलयष्टिप्रविलुप्तचन्दनम्।
बबन्ध बालारुणबभ्रु वल्कलं
पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥
यथा प्रसिद्धैर्मधुरं शिरोरुहै
र्जटाभिरप्येवमभूत् तदाननम्।

पित्रा कृताभ्यनुज्ञा तपः कुरु इति कृतानुमतिः सती पश्चात् तपःसिद्ध्युत्तरकालं प्रजासु जनेषु तदाख्यया तस्याः गौर्य्याः सञ्ज्ञया प्रथितं गौरीशिखरमिति प्रसिद्धम् इत्यर्थः शिखण्डिमत् न तु हिंस्रप्राणिप्रचुरम् इति भावः शिखरं शृङ्गं जगाम ययौ ॥ ७ ॥

विमुच्येति। अहार्य्यनिश्चया अनिवार्य्यनिश्चया सा गौरी विलोलाभिः चुलाभिः यष्टिभिः प्रतिसरैः प्रविलुप्तं प्रमृष्टं चन्दनं स्तनान्तरगतं येन तं तथोक्तं हारं मुक्तावलीं विमुच्य विहाय बालारुणबभ्रु बालार्कपिङ्गलं पयोधरयोः स्तनयोः उत्सेधेन उच्छ्रायेण विशीर्णा विघटिता त्रुटिता संहतिः अवयवसंश्लेषः यस्य तत् तथोक्तं वल्कलं कण्ठलम्बि स्तनोत्तरीयभूतं बबन्ध धारयामास इत्यर्थः ॥ ८ ॥

यथेति। तस्याः देव्याः आननं तदाननं प्रसिद्धैः भूषितैः 'प्रसिद्धौ ख्यातभूषितौ' इत्यमरः। रोहन्ति इति रुहाः

---

१ शिखण्डिनः मयूराः विद्यन्ते यत्र तत् मयूरबहुलम्।

२ अहार्य्यः निवारयितुम् अशक्यः निश्चयः निर्बन्धः यस्याः सा।

न षट्पदश्रेणिभिरेव पङ्कज
सशैवलासङ्गमपि[१] प्रकाशते ॥ ९ ॥
प्रतिक्षणं सा कृतरोमविक्रिया[२]
व्रताय मौञ्जीं त्रिगुणां बभार याम् ।
अकारि तत्पूर्व्वनिबद्धया तया
सरागमस्या रशनागुणास्पदम् ॥ १० ॥
विसृष्टरागादधरान्निवर्त्तित
स्तनाङ्गरागारुणिताच्च कन्दुकात् ।

'इगुपधज्ञाप्रीकिर क' इति कप्रत्यय । शिरसि रुहा तै शिरोरुहै मूर्द्धजै यथा मधर प्रियम् अभूत् 'स्वादुप्रियौ तु मधरौ' इत्यमर । जटाभिरप्यव मधुरम् अभूत् । तथा हि, पङ्कज पद्म षट्पदश्रेणिभि भ्रमरपङ्क्तिभि एव न किन्तु सह शैवलासङ्गेन सशैवलासङ्गम् अपि 'तन सह' इति तुल्ययोगे बहुव्रीहि । प्रकाशते शैवलेनापि शोभत एव इत्यर्थ ॥९॥

प्रतिक्षणमिति । सा देवी प्रतिक्षण क्षणे क्षणे कृतरोमविक्रिया पारुष्यात् कृतरोमाञ्चा त्रिगुणा त्रिरावृत्ता या मौञ्जी मुञ्जमयीं मेखला व्रताय तपसे बभार, तत् एव पूर्व्व प्रथम यस्य तत्पूर्व्व यथा तथा निबद्धया तया मौञ्ज्या अस्या देव्या रशनागुणस्य आस्पद स्थान जघन सह रागेण सराग सलोहितम् अकारि कृत सौकुमार्य्यातिशयात इति भाव ॥ १० ॥

विसृष्टेति । तया देव्या विसृष्टरागात् त्यक्तलाक्षारसरञ्ज-

---

१ सशैवलासङ्ग शैवलयं गसहितम ।

२ कृता उतपाग्निता पारुष्य त इति भाव रोमण विक्रिया विकार छक्षम इति यावत यया स। ताम ।

कुशाङ्कुरादानपरिक्षताङ्गुलिः१
कृतोऽक्षसूत्रप्रणयी२ तया करः ॥ ११ ॥
महार्हशय्यापरिवर्त्तनच्युतैः
स्वकेशपुष्पैरपि या स्म दूयते।
अशेत सा बाहुलतोपधायिनी
निषेदुषी स्थण्डिल एव केवले ॥ १२ ॥

नात् निसृष्टेति पाठे नितरां त्यक्तलाक्षारागात् अधरात् अधरोष्ठात् निवर्त्तित रागत्यागेन निष्प्रयोजनत्वात् इति भाव, तथा स्तनाङ्गरागेण अरुणितात् अरुणीकृतात्, पतनसमये तस्य स्तनयोरुपरोधात् इति भाव कन्दुकाच्च निवर्त्तितः कुशाङ्कुराणाम् आदानेन लवनेन परिक्षता व्रणिता अङ्गुलयः यस्य स तथोक्तः करः पाणिः अक्षसूत्रप्रणयी अक्षमालासहचरः कृतः ॥ ११ ॥

महार्हेति। महान् अर्हः मूल्यं यस्याः सा महार्हा श्रेष्ठा या शय्या तस्याः परिवर्त्तनेन लुण्ठनेन च्युतैः भ्रष्टैः स्वकेशपुष्पैः अपि या देवी दूयते स्म क्लिश्यति स्म पुष्पाधिकसौकुमार्य्यात् इति भाव। सा देवी बाहुलताम् उपधत्ते उपधानीकरोति इति बाहुलतोपधायिनी सती केवले सस्तरणरहिते स्थण्डिले भूमौ एव अशेत शयितवती। तथा निषेदुषी उपविष्टा च 'क्वसुश्च' इति क्वसु, 'उगितश्च' इति ङीप्। भूमावेव शयनादिव्यवहारो न जातूपरीत्यर्थः ॥ १२ ॥

१ आदानं छेदनम्। आङ्पूर्व्वात् छेदार्थकात् दोधातोः भावे अनट्।
२ अक्षसूत्रे जपमालिकायां प्रणयः आसक्तिः विद्यते यस्य सः।

पुनर्ग्रहीतुं नियमस्थया तया
द्वयेऽपि निक्षेप१ इवार्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टित
विलोलदृष्ट हरिणाङ्गनासु च ॥ १३ ॥
अतन्द्रिता२ सा स्वयमेव वृक्षकान्
घटस्तनप्रस्रवणैर्व्यवर्द्धयत्३ ।

पुनरिति। नियमस्थया व्रतस्थया तया देव्या द्वये अपि द्वय पुन ग्रहीतु पुन आदातु निक्षेप अर्पितम् इव निक्षेपत्वेन अर्पित किमु। क्वचित द्वयीषु इति प्रामादिक पाठ । कुत्र द्वये कि द्वयमर्पितमित्याह, तन्वीषु लतासु विलास एव चेष्टित विलासचेष्टित, हरिणाङ्गनासु विलोलदृष्ट चञ्चलावलोकित च। व्रतस्थायां तस्या तयोरदर्शनाल्लतादिषु दर्शनाच्च अर्पितमिव इत्युत्प्रेक्षा न तु वस्तुतोऽर्पणमस्ति इति भाव ॥ १३ ॥

अतन्द्रितेति। सा देवी स्वयम् एव अतन्द्रिता असञ्जात-तन्द्रा सती। तारकादित्वादितच्प्रत्यय । वृक्षकान स्वल्पवृक्षान 'अल्पे' इति अल्पार्थे कप्रत्यय । घटौ एव स्तनौ तयो प्रस्रवणै प्रस्रुतपयोभि व्यवर्द्धयत्। गुह कुमार अपि प्रथमाप्तजन्मना प्रथमलब्धजन्मनाम् अग्रजातानाम् इत्यर्थ येषा वृक्षकाणा सम्बन्धि पुत्रवात्सल्य सुतप्रेम न अपाकरिष्यति उत्तरत्र कुमारो द्वयेऽपि न तेषु पुत्रवात्सल्य निवर्त्तिष्यते इत्यर्थ ॥ १४ ॥

१ निक्षिप्यते असौ इति निक्षेप न्यास । कम्मणि घञ ।

२ तन्द्रा आलस्य तन्द्रिता न तन्द्रिता अतन्द्रिता आलस्यरहिता ।

३ व्यवर्द्धयत वर्द्धयामास ।

गुरुोऽपि येषा प्रथमाप्तजन्मना१
　न पुत्रवात्सल्यमपाकरिष्यति ॥ १४ ॥
अरण्यबीजाञ्जलिदानलालिता.
　तथा च तस्या हरिणा विशश्वसु ।
यथा तदीयैर्नयनै कुतूहलात्
　पुर सखीनाममिमीत लोचने ॥ १५ ॥
कृताभिषेका हुतजातवेदसं२
　त्वगुत्तरासङ्गवतीमधीतिनीम् ।

अरण्येति। अरण्यबीजाना नीवारादीनाम् अञ्जलय तेषा दानेन लालिता हरिणाश्च तस्या देव्या तथा विशश्वसु विस्रम्भ जग्मु । 'समौ विस्रम्भविश्वासौ' इत्यमर । यथा कुतूहलात् औत्सुक्यात् तदीयै हरिणसम्बन्धिभि नयनै नेत्रै करणै स्वकीये लोचने सखीना पुर पुरत अनेन तेषा सम्बन्ध सहत्वमुक्तम् । अमिमीत अक्षिपरिमाणतारतम्यज्ञानाय मान चकार इत्यर्थ । केचित तु सा पार्वती तदीयै नेत्रै कुतूहलात पुर अग्रे वर्त्तमानाना सखीना लोचने अमिमीत प्रतस्खल्वात्मनेपद इत्याहु । माङ्माने इत्यस्माद्धातोर्लङ् । इयमेव खलु विश्वासस्य परा काष्ठा यदक्षिपीडनेऽपि न क्षुभ्यन्ति इति भाव ॥ १५ ॥

तप प्रभावमाह कृतेति । कृताभिषेका कृतस्नाना हुतजातवेदस हुताग्निकां कृतहोमाम इत्यर्थ त्वचा वल्कलेन उत्तरा

---

१ प्रथमम आप्त जन्म यै ते प्रथमाप्तजन्मान तेषाम ।

२ जाता वेदा यस्मात् सः जातवेदा अग्नि हुत जातवेदा यया सा हुतजातवेदा ताम ।

दिदृक्षवस्तामृषयोऽभ्युपागमन्
न धर्म्मवृद्धेषु वयः समीक्ष्यते ॥ १६ ॥
विरोधिसत्वोज्झितपूर्ब्बमत्सरं१
द्रुमैरभीष्टप्रसवार्च्चितातिथि।
नवोटजाभ्यन्तरसम्भृतानलं
तपोवनं तच्च बभूव पावनम् ॥ १७ ॥

सङ्गवती उत्तरीयवतीम् अधीतम अस्या अस्ति इति अधी तिनी श्रुतिपाठादि कुर्व्वतीम् 'इष्टादिभ्यश्च' इतीनिप्रत्ययः। तां देवीं दिदृक्षव द्रष्टुम इच्छव ऋषयः मुनयः अभ्यपागमन समुपागता। न चात्र कनिष्ठसेवादोष इत्याह, धर्म्मवृद्धेषु वयः न समीक्ष्यते न प्रमाणीक्रियते सति धर्म्मज्यैष्ठ्ये वयोज्यैष्ठ्य न प्रयोजकम् इत्यर्थः। तथाच मनुः, 'न तेन वृद्धो भवति येनास्य पलितं शिरः। यो वा युवाप्यधीयानः तं देवाः स्थविरं विदुः॥' इति ॥ १६ ॥

विरोधीति। विरोधिभिः सत्वैः गोव्याघ्रादिभिः उज्झितः पूर्ब्बमत्सरः त्यक्तपूर्ब्बवैरं हिंसारहितम् इत्यर्थः द्रुमैः अभीष्टः प्रसवैः इष्टफलैः अर्च्चिताः पूजिताः अतिथयः यस्मिन् तत् तथोक्तं नवानाम् उटजानां पर्णशालानाम् अभ्यन्तरेषु सम्भृताः सञ्चिताः अनलाः अग्नयः यस्मिन् तत् तथोक्तं तत् च तपोवनं पावयति इति पावनं बभूव, अहिंसातिथिसत्काराग्निपरिचर्य्याभिर्जगतः पावनं बभूव इत्यर्थः ॥ १७ ॥

१ विरोधिभिः परस्परं शत्रुभावम् आपन्नैः सत्वैः प्राणिभिः उज्झितः पूर्ब्बमत्सरः पूर्ब्बवैरं स्वाभाविकवैरम् इति यावत् यस्मिन् तत्।

यदा फलं पूर्ब्बतपःसमाधिना
　न तावता१ लभ्यममंस्त काङ्क्षितम् ।
तदानपेक्ष्य स्वशरीरमार्द्दवं
　तपो महत् सा चरितुं प्रचक्रमे ॥ १८ ॥
क्लमं ययौ कन्दुकलीलयापि या
　तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चनपद्मनिर्म्मितं
　मृदु प्रकृत्या च ससारमेव च ॥ १९ ॥

यदेति । सा देवी यदा यस्मिन् काले तावता तावत्प्रमाणेन पूर्ब्बतपःसमाधिना पूर्ब्बेण अनुष्ठीयमानप्रकारेण तपोनियमेन काङ्क्षितं फलं लभ्यं लब्धुं शक्यं न अमंस्त अज्ञासीत् अस्तु इत्यर्थः तदा तत्काले अविलम्बेन इत्यर्थः स्वशरीरस्य मार्द्दवं मृदुत्वं सौकुमार्य्यम् अनपेक्ष्य अविगणय्य महत् दुश्चरं तपः चरितुं साधयितुं प्रचक्रमे उपचक्रमे ॥ १८ ॥

क्लममिति । या देवी कन्दुकलीलया कन्दुकक्रीड़या अपि क्लमं ययौ ग्लानिं प्राप, तया देव्या मुनीनां चरितं तीव्रं तपः व्यगाह्यत प्रविष्टम । अत्रोत्प्रेक्ष्यते, ध्रुवम् अस्याः वपुः काञ्चनपद्मेन सुवर्णकमलेन निर्म्मितं घटितम् अत एव प्रकृत्या पद्मस्वभावेन मृदु च सुकुमारम् अपि काञ्चनस्वभावेन ससारं च कठिनम् एव । तथा च तदुपादानकत्वात् देव्याः परम सुकुमारस्यापि तीव्रतपश्चमत्कारमिति उत्प्रेक्षार्थः ॥ १९ ॥

१ तत् परिमाणम् अस्य इति तावान् तेन । तत्कालः परिमाणमस्य वतुप् ।

शुचौ चतुर्णां ज्वलतां शुचिस्मिता
हविर्भुजां मध्यगता सुमध्यमा[1]।
विजित्य नेत्रप्रतिघातिनीं[2] प्रभाम्
अनन्यदृष्टिः सवितारमैक्षत॥ २०॥
तथाभितप्तं सवितुर्गभस्तिभि-
र्मुखं तदीयं कमलश्रियं दधौ।
अपाङ्गयोः केवलमस्य दीर्घयोः
शनैः शनैः श्यामिकया कृतं पदम्॥ २१॥

शुचाविति। शुचौ ग्रीष्मे शुचिस्मिता विशदमन्दहासा सुमध्यमा पार्व्वती ज्वलतां दीप्तिमतां चतुर्णां हविर्भुजाम् अग्नीनां मध्यगता सती नेत्रे प्रतिहन्ति इति तां नेत्रप्रतिघातिनीं प्रभां सवितृतेजः विजित्य न विद्यते अन्यत्र दृष्टिः यस्याः सा अनन्यदृष्टिः सती सवितारं सूर्य्यम् ऐक्षत ददर्श। 'ग्रीष्मे पञ्चाग्निमध्यस्थः वर्षासु स्थण्डिलेशयः' इति स्मरणात् पञ्चाग्निमध्ये तपश्चचार इत्यर्थः। तत्र सवितैव पञ्चमोऽग्निः अ— सविता सवितैवाग्निरिति श्रौतनिर्द्धारात्॥ २०॥

तथेति। सवितुः सूर्य्यस्य गभस्तिभिः किरणैः तथा पूर्व्वोक्तप्रकारेण अभितप्तं सन्तप्तं तस्याः इदं तदीयं मुखं कमलश्रियं कमलस्य शोभां दधौ प्राप। यथा रवितापात् कमलं न म्लायति प्रत्युत विकसति तथा तदीयं मुखमासीत् इति भावः। किन्तु अस्य मुखस्य दीर्घयोः अपाङ्गयोः केवलं नेत्रान्तयोः एव शनैः शनैः मन्दं मन्दं श्यामिकया कालिम्ना पदं स्थानं कृतं, तयोः सौकुमार्य्यात् इत्यर्थः॥ २१॥

१ सु शोभनं मध्यमं मध्यभागः यस्याः सा शोभनमध्यभागा।

२ नयनप्रतिरोधिनीम्।

अयाचितोपस्थितमम्बु केवलं
रसात्मकस्योडुपतेश्च रश्मयः ।
बभूव तस्याः किल पारणाविधि-
र्न वृक्षवृत्तिव्यतिरिक्तसाधनः ॥ २२ ॥
निकामतप्ता विविधेन वह्निना
नभश्चरेणेन्धनसम्भृतेन[1] सा ।
तपात्यये वारिभिरुक्षिता नवै-
र्भुवा सहोष्माणममुञ्चदूर्ध्वगम्[2] ॥ २३ ॥

अयाचितेति। अयाचितोपस्थितम् अप्रार्थितोपनतं केवलम् अम्बु उदकं रसात्मकस्य अमृतमयस्य उडूनां नक्षत्राणां पतिः चन्द्रः तस्य रश्मयश्च तस्याः पार्व्वत्याः पारणाविधिः अभ्यवहारकर्म्म बभूव तावन्मात्रसाधनकोऽभूत इत्यर्थः । साध्यसाधनयोरभेदेन व्यपदेशः साधनान्तरव्यावृत्त्यर्थः । किल इति प्रसिद्धौ। वृक्षाणां या वृत्तिः जीवनोपायः तद्व्यतिरिक्तः साधनम उपायः यस्य स तथोक्तः पारणाविधिः न बभूव। वृक्षोऽप्ययाचितोपस्थितेन मेघोदकेन इन्दुकिरणैश्च जीवतीति प्रसिद्धम अम्बिकापि तावन्मात्रमवालम्बत इत्यर्थः ॥ २२ ॥

निकामेति। विविधेन पञ्चविधेन इत्यर्थः नभश्चरेण खेचरेण आदित्यरूपेण इत्यर्थः इन्धनसम्भृतेन काष्ठसमिद्धेन वह्निना निकामम अत्यन्तं तप्ता सा अम्बिका तपात्यये ग्रीष्मान्ते प्रावृषि इत्यर्थः नवैः वारिभिः उक्षिता सिक्ता सती भुवा

[1] नभश्चरेण नभसि चरति यः स तेन । चर्धातोः कर्त्तरि टक् ।
[2] ऊर्ध्वं गच्छति इति ऊर्ध्वगः । गमधातोः कर्त्तरि ड ।

स्थिता क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः।
वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदविन्दवः ॥ २४ ॥
शिलाशयान्तामनिकेतवासिनीं
निरन्तरास्वन्तरवातवृष्टिषु[१]।

पञ्चाग्नितप्तया सह ऊर्द्धगम् ऊर्द्धप्रसृतम् उष्माणं बाष्पम् अमुञ्चत। ग्रीष्मोष्मबाष्पोष्माणः इति यादवः ॥ २३ ॥

स्थिता इति। उदकस्य विन्दवः उदविन्दवः 'मन्थौदन' इत्यादिना उदकशब्दस्य उदादेशः। प्रथमे उदविन्दवः प्रथम विशेषणात् विन्दूनां विरलत्वं बहुवचनान्नातिविरलत्वञ्च गम्यते तथाच चिरत्वेनाभ्यन्तरगमनयोर्निर्वाहः। तस्याः पार्व्वत्याः पक्ष्मसु नेत्रलोमसु क्षणं स्थिताः स्थितिं गताः, स्थिता इत्यनेन पक्ष्मणां सान्द्रत्वं क्षणमिति स्नैग्ध्यञ्च गम्यते। अनन्तरं ताड़िताः व्यथिताः अधरः ओष्ठः यैः ते तथोक्ताः, एतेना धरस्य मार्द्दवं गम्यते। ततः पयोधरयोः स्तनयोः उत्सेधे उपरिभागे निपातेन पतनेन चूर्णिताः जर्ज्जरिताः कुचकाठिन्यात् इति भावः। तदनु वलीषु उदररेखासु स्खलिताः निम्नोन्नतत्वात् इति भावः। इत्थं चिरेण न तु शीघ्रं प्रतिबन्धबाहुल्यात् इति भावः। नाभिं प्रपेदिरे प्रविष्टाः न तु निर्जग्मुः, एतेन नाभेर्गाम्भीर्य्यं गम्यते। अत्र प्रतिपदमर्थवत्त्वात् परिकरालङ्कारः ॥ २४ ॥

शिलेति। निरन्तरासु नीरन्ध्रासु अन्तरे मध्ये वात

१ निरन्तरासु नि नास्ति अन्तरं अवकाशः यासु ताः सु र्व्वविच्छिन्नासु।

व्यलोकयन्नुन्मिषितैस्तडिन्मयै
महातपःसाक्ष्य इव स्थिताः क्षपाः ॥२५॥
निनाय१ सात्यन्तहिमोत्किरानिलाः
सहस्यरात्रीरुदवासतत्परा।

याभा ताहशय या हष्टय तासु अ तरवातवृष्टिषु न निकेते गृहे वसति इति अनिकेतवासिनीम अना ।तदेशवासिनीम इत्यर्थं शिलायां शेते इति शिलाशया शिलातलशायिनीम। 'अधिकरणे शते' इति अच्प्रत्यय । ता पार्व्वती साक्षाद्द्रष्टा साक्षी। 'साक्षाद्द्रष्टरि सञ्ज्ञायाम' इति इनिप्रत्यय । तस्य कम्म साक्ष्य महातपस साक्ष्ये स्थिता क्षपा तड़िन्मयै विद्युद्रूपै उन्मिषितै अवलोकनै व्यनो यन्निव। इवेति चक्षुषा विलोकनमेव उत्प्रेक्ष्यते। साक्ष्य तु, 'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदय यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्तम्॥' इति प्रमाणसिद्धत्वात नोत्प्रेक्ष्यमित्यनुसन्धेयम् ॥ २५ ॥

एव वर्षासु विहित तप प्रकारमुक्त्वा सम्प्रति हेमन्ते तप स्वरूपप्रकारमाह, निनायेति। सा प र्व्वती,उतकिरन्ति क्षिपन्ति इति उत्किरा 'इगुप ज्ञा' इत्यादिना क । अत्यन्त हिमानाम् उ ।किरा अनिला यासु ता सहस्यरात्री पौषरात्री 'पौष तैषसहस्यौ द्वौ इत्यमर । उदके वास उदवास 'पेषवास-वाहनधिषु च' इति उद।देश । उदवासे तत्परा आसक्ता तथा परस्परम् आक्र न्दिनि अन्योऽन्यम् आक्रोशिनि पुर अग्रे वियुक्ते विरहिणि वि ोग प्राप्ते इति य वत। चक्रवाकी च ‍चक्रवाकश्च चक्रवाकौ तयो चक्रवाकयो मिथुने द्वन्द्वे कृपावती

१ यापयामास।

परस्पराक्रन्दिनि चक्रवाकयो
पुरो वियुक्ते मिथुने कृपावती ॥ २६ ॥
मुखेन सा पद्मसुगन्धिना निशि
प्रवेपमानाधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसम्पदा१
सरोजसन्धानमिवाकरोदपाम् ॥ २७ ॥
स्वय विशीर्णद्रुमपर्णवृत्तिता
परा हि काष्ठा तपसस्तया पुन ।

सती निनाय। दु खिषु कृपालुत्व महता स्वभाव इति चक्रवाक मिथुने कृपा, न तु कामितयेति व्याख्यानरकाश । अप्सु वासस्तु हेमन्ते क्रमशो वर्द्धयेत तप ' इति मनुः ॥ २६ ॥

मुखेनेति । सा पार्व्वती निशि रात्रौ पद्मवत् सुगन्धिना सुरभिणा 'गन्धस्य' इत्यादिना इकार । प्रवेपमान कम्पमाम अधर ओष्ठ एव पत्र दल तेन शोभते इति तथोक्तेन मुखेन तुषारवृष्ट्या तुहिनवर्षेण क्षता नाशिता पद्मसम्पद यासा तासाम् अपा सरोजसन्धान पद्मसङ्घटनम अकरोत् इव, इति उत्प्रेक्षालङ्कार । पद्मान्तर तुहिनेनोपहन्यते तन्मुखपद्म तु न तथेति व्यतिरेकालङ्कारो व्यज्यते इत्युभयो सङ्कर ॥ २७ ॥

स्वयमिति । स्वय विशीर्णानि स्वतश्च्युतानि द्रुमपर्णानि एव वृत्ति जीवन यस्य तस्य भाव तत्ता तपस परा काष्ठा परम उत्कर्ष हि । 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमर । तया देव्या पुन तत् पर्णवर्त्तनम अपि अपाकीर्णम् अपाकृतम अपि, अत पर्णापकारणात् हेतो प्रिय वदति इति प्रियम्वदा । 'प्रियवशे

---

१ पद्मसम्पद पद्मानि एव सम्पद सम्पत्तय ।

तदप्यपाकीर्णमतः प्रियंवदां
वदन्त्यपर्णेति च तां पुराविदः ॥ २८ ॥
मृणालिकापेलवमेवमादिभि-
र्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम्।
तपः शरीरैः कठिनैरुपार्जितं
तपस्विनां दूरमधश्चकार सा ॥ २९ ॥
अथाजिनाषाढधरः प्रगल्भवाक्
ज्वलन्निव ब्रह्ममयेन तेजसा।

वदः खच्' इति खच्प्रत्ययः, 'अरुर्द्विषदजन्तस्य मुम' इति मुमागमः। तां पार्व्वतीं पुराविदः पुराणज्ञाः तपःकरणसमये अविद्यमानं पर्णभक्षणं यस्याः सा अपर्णा इति वदन्ति, नामान्तरसमुच्चयार्थश्चकारः। स्वयं प्रियंवदाः परेषामपि प्रियत्वाद् भाजनानि भवन्ति इति भावः। अत्रापर्णामिति अपपाठः, इति शब्दाभिहिते द्वितीयानुपपत्तेः। यथाह वामनः 'निपातेनाप्यभिहिते कर्म्मणि न कर्म्मविभक्तिः परिगणनस्य प्रायिकत्वात्' इति ॥ २८ ॥

मृणालिकेति। मृणालिकापेलवं पद्मिनीकन्दकोमलं स्वं स्वकीयम् अङ्गं शरीरम् एवम् उक्तप्रकारं तोयाग्निमध्यवास-व्रतम् आदिः येषां तैः व्रतैः अहश्च निशा च अहर्निशम्। समाहारे द्वन्द्वैकवद्भावः, अत्यन्तसंयोगे द्वितीया। ग्लपयन्ती कर्षयन्ती सा पार्व्वती कठिनैः क्लेशसहैः इत्यर्थः शरीरैः उपार्ज्जितं सम्पादितं तपस्विनां मुनीनां तपः दूरम् अत्यन्तम् अधश्चकार तिरश्चकार अतिशिश्ये इत्यर्थः, तपस्विभिरप्येवं तपः कर्त्तुं न शक्यते इति तात्पर्य्यार्थः ॥ २९ ॥

अथेति। अथ अनन्तरम् अजिनं कृष्णमृगत्वक् आषाढः

विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्ध[1] प्रथमाश्रमो यथा ॥ ३० ॥
तमातिथेयी बहुमानपूर्व्वया
सपर्य्यया प्रत्युदियाय पार्व्वती।
भवन्ति साम्येऽपि निविष्टचेतसां
वपुर्विशेषेष्वतिगौरवा क्रिया ॥ ३१ ॥

प्रयोजनम् अस्य इति आषाढ पालाशदण्ड। 'पालाशदण्ड आषाढ' इत्यमर। 'विशाखाषाढादण् मन्थदण्डयो' इति अण्प्रत्यय। तद्धरः तथोक्त प्रगल्भवाक् प्रौढवचन ब्रह्ममयेन वैदिकेन तेजसा ब्रह्मवर्चसा इत्यर्थ ज्वलन इव स्थित, इवशब्दो निर्द्धारणार्थ। कश्चित् अनिर्दिष्ट जटिल जटावान् ब्रह्मचारी इति शेष। पिच्छादित्वात् इलच्प्रत्यय। शरीरबद्ध बद्धशरीर शरीरवान् इत्यर्थ। वाहिताग्न्यादिषु पाठात् साधु। प्रथमाश्रम यथा ब्रह्मचर्य्याश्रम इव, यथाशब्द इवार्थे। तपोवन देव्या इति शेष, विवेश प्रविष्टवान् ॥ ३० ॥

तमिति। अतिथिषु साध्वी आतिथेयी 'पथ्यतिथ्यादिना' ढञ्प्रत्यय, 'टिड्ढाणञ्' इत्यादीना ङीप्। पार्व्वती त ब्रह्मचारिण बहुमानपूर्व्वया बहुमान पूर्व्व यस्या तया गौरवपूर्व्वया इत्यर्थ, सपर्य्यया अर्च्चया। 'सपर्य्यार्च्चार्हणा समा' इत्यमर। प्रत्युदियाय प्रत्युज्जगाम। कथ समानेऽपि तस्यास्तादृशी प्रतिपत्तिरत आह स। साम्ये सति अपि निविष्टचेतसा स्थिरचित्ताना वपुर्विशेषेषु व्यक्तिविशेषेषु अतिशयित गौरव यासु ता अतिगौरवा अतिगौरवसहिता क्रिया चेष्टा

1 बद्ध शरीर येन स शरीरबद्ध।

विधिप्रयुक्तां परिगृह्य सत्क्रियां
परिश्रमं नाम विनीय च क्षणम्।
उमां स पश्यन् ऋजुनैव चक्षुषा
प्रचक्रमे[1] वक्तुमनुज्झितक्रमः[2] ॥ ३२ ॥
अपि क्रियार्थं सुलभं[3] समित्कुशं
जलान्यपि स्नानविधिक्षमाणि ते।

ऽवन्ति प्रवर्त्तन्ते इत्यर्थः, साधवो न साम्याभिनिवेशिन इति भावः ॥ ३१ ॥

विधीति। स ब्रह्मचारी विधिना प्रयुक्ताम् अनुष्ठितां सत्क्रियां पूजां परिगृह्य स्वीकृत्य क्षणं परिश्रमं विश्रामं च विनीय नाम, नामेत्यपरमार्थे। अथ उमाम् ऋजुना एव विलासरहितेन एव चक्षुषा पश्यन् अनुज्झितक्रमः अत्यक्तोचितपरिपाटीकः सन् वक्तुं प्रचक्रमे प्रारेभे ॥ ३२ ॥

अपीति। अत्र अपिशब्दः प्रश्ने। क्रियार्थं होमादिकर्म्मानुष्ठानार्थं समिधश्च कुशाश्च समित्कुशम्। 'जातिरप्राणिनाम्' इति द्वन्द्वैकवद्भावः। सुलभम् अपि? सुलभं कच्चित्? जलानि ते तव स्नानविधिक्षमाणि अपि? स्नानक्रियायोग्यानि कच्चित्? किं च स्वशक्त्या निजसामर्थ्यानुसारेण तपसि प्रवर्त्तसे अपि? देहमपीडयित्वा तपश्चरसि कच्चित्? इत्यर्थः। युक्तञ्च नामैतत् खलु, यस्मात् शरीरम् आद्यं धर्म्मसाधनम्। धर्म्मस्तु कायेन मनसा वाचा बुद्ध्या धनादिना च बहुभिः साध्यते तेषु च वप-

---

१ प्रपूर्वात् क्रमधातोः आरम्भार्थे आत्मनेपदम्।

२ अनुज्झितः क्रमः येन सः।

३ सु सुखेन लभ्यते यत् तत्। कर्म्मणि खल्।

अपि स्वशक्त्या तपसि प्रवर्त्तसे
/ शरीरमाद्यं खलु धर्म्मसाधनम्॥ ३३॥
अपि त्वदावर्ज्जितवारिसम्भृतं
प्रवालमासामनुबन्धि१ वीरुधाम्।
चिरोज्झितालक्तकपाटलेन ते
तुला यदारोहति दन्तवाससा॥ ३४॥
अपि प्रसन्नं हरिणेषु ते मनः
करस्थदर्भप्रणयापहारिषु।

रेव मुख्य साधन सति देहे धर्म्मार्थकाममोक्षलक्षणाश्चतुर्वर्गा साध्यन्ते अत एव 'सततमात्मानमेव गोपायीत इति श्रुति ॥३३॥

अपि त्वदेति। त्वया आवर्ज्जितेन सिक्तेन वारिणा सम्भृत जनितम् आसां वीरुधां लतानां प्रवाल पल्लवम् अनुबन्धि अपि? अनुस्यूतं किम्? यत प्रवालं चिरोज्झित चिरकालत्यक्त लाक्षाराग येन तत तथापि पाटल स्वभावरक्तम् इत्यर्थ तेन चिरोज्झितालक्तकपाटलेन ते तव दन्तवाससा अधरेण 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससो' इत्यमर। तुलां साम्यम् आरोहति गच्छति इत्यर्थ। अत्र तुलाशब्दस्य सादृश्यवाचित्वात तद्योगेऽपि 'तुल्यार्थैरतुलोपमाभ्याम् इति न तृतीयाप्रतिषेध तत्र सूत्रे सदृशवाचिन एव ग्रहणादिति॥ ३४॥

अपीति। करस्थानं दर्भाणं प्रणयेन स्नेहेन अपहरन्ति इति ते तथोक्तेषु सापराधेषु इति भाव। अपराधिषु इति पाठे दर्भाणां प्रणयेन प्रार्थनया अपराधिषु हारिणेषु विषये ते

१ अनुबध्नाति अविच्छेदेन तिष्ठति यत तत अनुबन्धि। अनुपूर्वात बन्धधातो कर्त्तरि णिन।

य उत्पलाक्षि१ प्रचलैर्विलोचनै
  स्तवाक्षिसादृश्यमिव प्रयुञ्जते ॥ ३५ ॥
यदुच्यते पार्व्वति पापवृत्तये
  न रूपमित्यव्यभिचारि तद्वच ।
तथाहि ते शीलमुदारदर्शने
  तपस्विनामप्युपदेशता गतम् ॥ ३६ ॥

मन प्रसन्नम् अपि ? न क्षुभित किम? सापराधेष्वपि न कोपि तम तपस्विभि इति भाव । हे उत्पलाक्षि । ये हरिणा प्रचले चपलै विलोचनै नेत्रै तव अक्षिसादृश्य प्रयुञ्जते इव अभिनयन्ति ५०, प्रसन्नतान् मृगा त्वदक्षि लक्षयने साम्यमुपयान्ति इति भाव । उत्पलक्षेपचलैरिति पाठान्तरे उत्पलकम्पचलै 'भावानयने द्रव्यानयनम' इति न्यायेन क्षिप्यमाणोत्पलचलै इत्यर्थ ॥ ३५ ॥

यदिति । हे पार्व्वति । रूप सौम्याकृति पापवृत्तये पापाचरणाय न भवति इति यत् उच्यते लोकैरिति शेष तत् वच न व्यभिचरति न स्खलति इति अव्यभिचारि सत्यम 'यत्राकृतिस्तत्र गुणा, न सुरूपा पापसमाचारा भवन्ति' इत्यादयो लोकवादा न विसंवादमासादयन्ति इत्यर्थ । किमिति ज्ञायते? तथाहि हे उदारदर्शने । आयताक्षि । सुरूपे इत्यर्थ अथवा उन्नतज्ञाने । विवेकवति इत्यर्थ ते तव शील सद्वृत्तम् 'शील स्वभावे सद्वृत्त' इत्यमर । तपस्विनाम अपि, उपदिश्यते अनेन इति उपदेश प्रवर्तक प्रमाण तत्ताम् उपदेशता गत प्राप्तम । तपस्विनोऽपि त्वां वीक्ष्य स्ववृत्तं प्रवर्त्तन्ते इति भाव ॥३६ ॥

१ उत्पले इव अक्षिणी नयने यस्या सा तत्सम्बोधनं ।

विकीर्णसप्तर्षिबलिप्रहासिभि
तथा न गाङ्गै १ सलिलैर्दिवश्च्युतै ।
यथा त्वदीयैश्चरितैरनाविलै
महीधर पावित एष सान्वय ॥ ३७ ॥
अनेन धर्म्म सविशेषमद्य मे
त्रिवर्गसार प्रतिभाति भामिनि२ ।
त्वया मनोनिर्विषयार्थकामया
यदेक एव प्रतिगृह्य सेव्यते ॥ ३८ ॥

विकीर्णेति। एष महीधर हिमवान सप्त च ते ऋषयश्च सप्तर्षय 'दिक्सङ्ख्ये सञ्ज्ञायाम' इति समास । विकीर्णै पर्य्यस्तै सप्तर्षीणां सम्बन्धिभि बलिभि पुष्पोपहारै प्रहसन्ति ये ते तथोक्तै दिव अन्तरिक्षात् च्युतै गाङ्गै सलिलै तथा न पावित अनाविलै अकलुषै त्वदीयै चरितै यथा सान्वय सपुत्रपौत्र पावित पवित्रीकृत ॥ ३७ ॥

अनेनेति। हे भामिनि। प्रशस्ताभिप्राये। अनेनकारणेन धर्म्म सविशेष सातिशयम् अद्य मे त्रयाणा धर्म्मकामार्थाना वर्ग त्रिवर्ग 'त्रिवर्गो धर्म्मकामार्थैश्चतुर्वर्ग समोक्षकै' इत्यमर। तत्र सार श्रेष्ठ प्रतिभाति यत् यस्मात कारणात मनस निर्विषयौ अर्थकामौ यस्या तया त्वया एक धर्म्म एव प्रतिगृह्य स्वीकृत्य सेव्यते यत् त्वया अर्थकामौ विहाय धर्म्म एवाश्रित्य अत सर्व्वथा न स श्रेयानिति प्रतिपद्यते इत्यर्थ ॥ ३८ ॥

१ गङ्गाया इमानि गाङ्गानि तै । इदमर्थे ष्ण ।

२ भाम प्रशस्ताभिप्राय विद्यते यस्या सा तत्सम्बोधने

प्रयुक्तसत्कारविशेषमात्मना
 न मां परं सम्प्रतिपत्तुमर्हसि ।
यतः सतां सन्नतगात्रि सङ्गतं
 मनीषिभिः साप्तपदीनमुच्यते ॥ ३९ ॥
अतोऽत्र किञ्चिद्भवतीं बहुक्षमां
 द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने
 न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥ ४० ॥

सम्प्रति मनोरथं जिज्ञासुः प्रस्तौति प्रयुक्तेति। आत्मना त्वया प्रयुक्तः कृतः सत्कारविशेषः पूजातिशयः यस्य तं मां परम् अन्यं सम्प्रतिपत्तुम् अवगन्तुं न अर्हसि। हे सन्नतगात्रि। सन्नताङ्गि। 'अङ्गगात्रकण्ठेभ्यः' इति वक्तव्यात् ङीप्। यतः कारणात् मननम् ईषिभिः मनीषिभिः विद्वद्भिः। शकन्ध्वादित्वात् साधु। सतां सङ्गतं सख्यं सप्तभिः पदैः आपाद्यते इति साप्तपदीनं सप्तपदोच्चारणसाध्यम् उच्यते। तच्च आवयोस्त्वत्कृतसत्कारप्रयोगादेव सिद्धम् इत्यर्थः। साप्तपदीनं सख्यमिति निपातनात् साधु ॥ ३९ ॥

अत इति। हे तपोधने। अतः सख्यात् हेतोः अत्र प्रस्तावे बहुक्षमां बह्वक्लिश्टां। यद्वा क्षमावतीं भवतीं त्वां द्विजातिभावात् ब्राह्मणत्वात् उपपन्नचापलः सुलभधार्ष्ट्यः अयं जनः स्वयम् इत्यर्थः। किञ्चित् प्रष्टुं मनः यस्य सः किञ्चित्प्रष्टुमनाः प्रष्टुकामः 'तुम् काममनसोरपि' इति मकारलोपः। रहसि भवं रहस्यं गोप्यं न चेत् प्रतिवक्तुम् अर्हसि ॥ ४० ॥

१ सप्तपदी गमनं पद्यते भावे क्तः।

कुले प्रसूति प्रथमस्य वेधस
त्रिलोकसौन्दर्यमिवोदितं वपु ।
अमृग्यमैश्वर्यसुखं नवं वय
तप फलं स्यात् किमत परं वद ॥ ४१ ॥
भवत्यनिष्टादपि नाम दु सहात्
मनस्विनीनां प्रतिपत्तिरीदृशी ।
विचारमार्गप्रहितेन चेतसा
न दृश्यते तच्च कृशोदरि त्वयि ॥ ४२ ॥

प्रश्नत्रयमाह कुल इति। प्रथमस्य वेधस हिरण्यगर्भस्य कुले अन्ववाये प्रसूति उत्पत्ति 'यज्ञार्थं हि मया सृष्टो हिमवानचलेश्वर' इति ब्रह्मपुराणवचनात्। वपु शरीरं त्रयाणां लोकानां सौन्दर्यं इव उदितम् एकत्र समुदितम्। ऐश्वर्यसुखसम्पत्सुखं अमृग्यम् अन्वेषणीयं न भवति किन्तु सिद्धमेव इत्यर्थ। वय नवं यौवनम् इत्यर्थ अत परम् अत अन्यत् किं तपःफलं स्यात्। वद अस्ति चेत् ब्रूहि इति शेष। न किञ्चिदस्ति इत्यर्थ ॥ ४१ ॥

भवतीति। दु सहात् मार्गेण अगम्यात् अनिष्टात् मनोऽभिमतात् अपि मनस्विनीनां धीरस्त्रीणाम् ईदृशी तपश्चरणलक्षणा प्रतिपत्ति प्रवृत्ति 'प्रतिपत्तिस्तु गौरवे। प्राप्तौ प्रवृत्तौ प्रागल्भ्ये' इति यादव। भवति नाम। नाम इति सम्भावनायाम्। विचारमार्गप्रहितेन चेतसा चित्तेन तत् अनिष्टं च हे कृशोदरि। त्वयि न दृश्यते विचार्यमाणे तदपि नास्ति असम्भावितत्वात् इत्यर्थ ॥ ४२ ॥

अलभ्यशोकाभिभवेयमाकृति
विमानना सुभ्रु१ कुत पितुर्गृहे।
पराभिमर्शो न तवास्ति क. कर
प्रसारयेत२ पन्नगरत्नसूचये ॥ ४३ ॥

अ'नयभावमेव प्रपञ्चयति, अलभ्येति। हे सुभ्रु। इय त्वदीया आकृति मूर्त्ति अलभ्य लब्धुम अनर्ह शोकन भर्त्राद्यवभानजेन दुःखेन अभिभव तिरस्कार यस्या सा तथोक्ता दृश्यते इति शेष। असम्भावितस्वायमथ इत्याह पितु गृहे विमानना अवमान कुत ? न सम्भाव्यते एव इत्यर्थ। न चाप्यन्यस्माद्भवतीत्याह पराभिमर्श परधर्षण तु तव न अस्ति पन्नगरत्नसूचय फणिशिरोमणिशलाका ग्रहीतुम इत्यथ। 'क्रियार्थोपपदस्य च कर्म्मणि स्थानिन' इति चतुर्थी। कर हस्त क प्रसारयेत्। सुभ्रु इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वात 'नेयङुवङ्स्थानावस्त्री' इति नदीसञ्ज्ञाप्रतिषेधात् 'अम्बार्थनद्योर्ह्रस्व' इति ह्रस्वत्व नास्ति तेन ह्रस्व प्रामादिक इति केचित्। अन्ये तु 'अप्राणिजातेश्चारज्वादीनाम' इत्यत्र अलाबू। कर्कन्धूरित्यकारान्तादप्यूङ्प्रत्ययमुदाजहार भाष्यकार। एतस्मादेव ज्ञापकात क्वचिदूकारान्तस्याप्यूङन्तत्वान्नदीत्वे ह्रस्वमित्याहु। अत एवाह वामन 'ऊकारादप्यूङ्प्रकृते' इति। सुभ्रू कुतस्तातगृहेऽवमाननमिति पाठान्तरकरणन्तु साध्वसमेव उक्तोपपत्तिसम्भवात्। अन्यत्रापि 'सुभ्रु! त्व कुपितेत्यपास्तमशन त्यक्ता कथा योषिताम' इत्यादिप्रयोगदर्शनात वंशस्थवृत्ते पादादौ जगणभङ्गप्रसङ्गाच्चेत्यल गोष्ठिभि २१

---

१ सु शोभने भ्रुवौ यस्या सा तत्सम्बोधने।
२ विस्तारयेत।

किमित्यपास्याभरणानि यौवने
धृत त्वया वार्द्धकशोभि वल्कलम्।
वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते ॥ ४४ ॥

दिवं यदि प्रार्थयसे वृथा श्रमः
पितुः प्रदेशास्तव देवभूमयः।
अथोपयन्तारमलं समाधिना
न रत्नमन्विष्यति मृग्यते हि तत् ॥ ४५ ॥

किमिति। हे गौरि। किम् इति केन हेतुना यौवने त्वया आभरणानि अपास्य विहाय वृद्धस्य भाव वार्द्धकम्। मनोज्ञा 'दित्वादञ्प्रत्यय। 'वार्द्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्मणि' इति विश्व। तत्र शोभते इति वार्द्धकशोभि वल्कलं धृतम्। प्रदोषे रजनीमुखे स्फुटा प्रकटा चन्द्र तारकाश्च यस्या सा स्फुटचन्द्रतारका विभावरी रात्रि अरुणाय सूर्य्यसूताय कल्पते यदि? अरुणं गन्तुं कल्पते किम्? वद ब्रूहि क्रियार्थोपपदस्य इत्यादिना। चतुर्थी दीप्यमानशशाङ्कतारके प्रदोषे यद्यरुण उदेति ततो विभूषणापहारेण तव वल्कलधारणं सङ्घटते इति भाव ॥ ४४ ॥

तप प्रयोजनं निराकर्त्तुमाह दिवमिति। दिवं स्वर्गं प्रार्थयसे कामयसे यदि। तर्हि श्रम तपश्चरणप्रयास वृथा निष्फल। यदि स्वर्गार्थं तप्यसे तत श्रमं मा कार्षी। कुत? तव पितु हिमवत प्रदेशा देवभूमय स्वर्गपदार्था तत्रत्या इत्यर्थ। अथ उपयन्तारं वरं प्रार्थयसे तर्हि समाधिना तपसा अलं न कर्त्तव्यम् इत्यर्थ। निषेध्यस्य निषेधं प्रति करणत्वात् तृतीया। तथाहि रत्नं कर्तृ न अन्विष्यति न मृगयते ग्रहीतारम् इति

निवेदितं निश्वसितेन सोष्मणा[१]
मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते
भविष्यति प्रार्थितदुर्लभः कथम् ॥ ४६ ॥
अहो स्थिरः कोऽपि तवेप्सितो युवा
चिराय कर्णोत्पलशून्यतां[२] गते ।
उपेक्षते यः श्लथलम्बिनीर्जटाः
कपोलदेशे कलमाग्रपिङ्गलाः ॥ ४७ ॥

शः, किन्तु तेन रत्नं मृग्यते गृहीतृभिः इति शेषः। न हि वरार्थं त्वया तपसि वर्त्तितव्यं किन्तु तेनैव त्वदर्थम् इति भावः ॥ ४५ ॥

वरवाचकाक्षरश्रवणानन्तरमेव देव्या उष्णोच्छ्वासं समालक्ष्य प्रश्ने च प्रत्युत्तरमनुपलभ्य स्वयमेवाशङ्क्याह निवेदितमिति। सोष्मणा निश्वसितेन निश्वासवायुना निवेदितं चिन्तानुभावेन उष्णोच्छ्वासेन ते वरार्थित्वं सूचितम् इत्यर्थः। तर्हि किं प्रश्नव्यसनेनेत्याह, मन इति। मनः तु तथापि मे संशयम् एव गाहते प्राप्नोति। कुतः ? ते तव 'कृत्यानां कर्त्तरि वा' इति षष्ठी प्रार्थयितव्यः प्रार्थयितुमर्हः एव न दृश्यते प्रार्थितदुर्लभः। प्रार्थितः च दुर्लभः सः कथं भविष्यति नास्त्येव इत्यर्थः ॥ ४६ ॥

अथ पतिप्रार्थनामेव सिद्धवत् कृत्वाह, अहो इति। अहो चित्रं तव ईप्सितः आप्तुम् इष्टः युवा कः अपि स्थिरः कठिनः वर्त्तते इति शेषः। कुतः ? यः युवा चिराय चिरात्प्रभृति कर्णोत्पलशून्यतां गते प्राप्ते कपोलदेशे गण्डस्थले श्लथाः शिथिलः

१ उष्मणा सह वर्त्तमानः सोष्मा तेन उष्णेन।
२ कर्णोत्पलेन शून्यः तस्य भावः ताम्।

मुनिव्रतैस्त्वामतिमात्रकर्शितां
दिवाकराप्लुष्टविभूषणास्पदाम्।
शशाङ्कलेखामिव¹ पश्यतो दिवा
सचेतसः कस्य मनो न दूयते ॥ ४८ ॥
अवैमि सौभाग्यमदेन² वञ्चितं
तव प्रियं यश्चतुरावलोकिनः।

बन्धना अत एव लम्बिन्य ताः प्रयत्नलम्बिनी कलमा शालि विशेषा तेषाम् अग्राणि तद्वत् पिङ्गला जटा उपेक्षते यस्त्वा सोऽहशी दृष्ट्वा न व्यथते स नूनं वज्रहृदय इत्यर्थ ॥ ४७ ॥

मुनिव्रतैरिति। मुनिव्रतै चान्द्रायणादिभि अतिमात्रम् अत्यन्त कर्शिता कृशीकृता दिवाकरेण सूर्य्येण आप्लुष्टानि दग्धानि वातातपसम्पर्कात् म्लानत्वाच्च श्यामीकृतानि विभूषणा स्पदानि भूषणस्थानानि यस्याः ता तथोक्ताम् अत एव दिवा अहनि शशाङ्कलेखाम् इव स्थिता त्वा पश्यत सचेतस जीवत कस्य पुस मन न दूयते न परितप्यते अपि तु सर्व्वस्यैव इत्यर्थ ॥ ४८ ॥

अवैमीति। तव प्रिय वल्लभ सौभाग्यमदेन सौन्दर्य्यगर्व्वेण कृता वञ्चित विप्रलब्धम् अवैमि वद्मि। य प्रिय चतुर मधुरम् अवलोकते इति चतुरावलोकिन अरालपक्ष्मणा कुटिलरोमणा 'अराल वृजिन जिह्मम्' इत्यमर। अस्य त्वदीयस्य चक्षुष आत्मीय वक्त्र मुख चिर लक्ष्य विषय न करोति दृष्टिपथ

¹ शशाङ्कलेखां शशाङ्कस्य लेखा तां शशिकलाम्।
² सौभाग्यस्य मद तेन।

करोति लक्ष्यं चिरमस्य चक्षुषः
न वक्रमात्मीयमरालपक्ष्मणः[१] ॥ ४९ ॥
कियच्चिरं श्राम्यसि गौरि विद्यते
ममापि पूर्व्वाश्रमसञ्चितं तपः ।
तदर्द्धभागेन लभस्व काङ्क्षितं
वरं तमिच्छामि च साधु वेदितुम् ॥ ५० ॥
इति प्रविश्याभिहिता द्विजन्मना
मनोगतं सा न शशाक शंसितुम् ।

न गच्छति इत्यर्थः । तदयं गर्व्वेण हतो निष्फलात्मलाभो जात इति भावः ॥ ४९ ॥

कियदिति । हे गौरि । कियत् किम्प्रमाणकं किमवधिकम् इत्यर्थः । चिरं श्राम्यसि तपस्यसि । अत्यन्तसंयोगे द्वितीया । मम अपि पूर्व्वाश्रमे प्रथमाश्रमे ब्रह्मचर्य्याश्रमे तत्र सञ्चितं सम्पादितं तपः विद्यते अर्द्धश्चासौ भागश्च तेन तस्य तपसः अर्द्धभागेन एकदेशेन काङ्क्षितम् इष्टं वरम् उपयन्तारं लभस्व। तं वरं साधु सम्यक् वेदितुं ज्ञातुम् इच्छामि यद्यसौ योग्यो भवति तदा ममापि सम्मतिः इति भावः ॥ ५० ॥

इतीति । इति इत्थं द्विजन्मना द्विजेन प्रविश्य अन्तर्गत्वा आप्तवत् रहस्यमुद्घाट्य इत्यर्थः । अभिहिता उक्ता सा पार्व्वती मनोगतं ज्ञातं स्वं वरं शंसितुं वक्तुं न शशाक समर्था न अभूत् लज्जया इति शेषः । अथो अनन्तरं परिपार्श्ववर्त्तिनी वयस्या सखी विवर्त्तितं विचालितम् अनञ्जनम् अतएव शात् वर्ज्जितकज्जलं

१ अरालपक्ष्मणः अरालानि पक्ष्माणि यस्य तत् तस्य ।

अथो वयस्यां परिपार्श्ववर्त्तिनीं
विवर्त्तितानञ्जननेत्रमैक्षत ॥ ५१ ॥
सखी तदीया तमुवाच वर्णिन
निबोध साधो तव चेत् कुतूहलम्।
यदर्थमम्भोजमिवोष्णवारणं१
कृतं तप साधनमेतया२ वपु ॥ ५२ ॥
इयं महेन्द्रप्रभृतीनधिश्रिय ३
चतुर्दिगीशानवमत्य मानिनी।

नत्र यस्मिन् कर्म्मणि तत् तथा ऐक्षत नेत्रसञ्ज्ञयैव प्रत्युत्तर पाचयाञ्चकार इत्यर्थ ॥ ५१ ॥

सखीति। तस्या पार्श्वस्था इय तदीया सखी वयस्या त वर्ण प्रशस्ति इति चोरस्वामी। स अस्य अस्ति इति व.र्णिन ब्रह्मचारिणम वर्णाद्ब्रह्मचारिणि इति इनिप्रत्यय। उवाच ब्रूते स्म। किमिति ? ह साधो। विद्वन्। तव कुतूहलं चेत् श्रोतुमस्ति इति शेष तर्हि निबोध अवगच्छ आकर्णय इत्यर्थ बुध अव, गमने इति धातोर्भ्वादिकाल्लोट्। आतव्य किं तदाह यस्मै लाभाय इदम् यदर्थम् अर्थेन सह नित्यसमास सर्व्वलिङ्गता चेति वक्तव्यम्' इति वार्त्तिकनियमात क्रियाविशेषणम्। एतया पार्व्वत्या अम्भोज पद्मम् उष्णवारणम् आतपत्रम इव, वपु शरीर तप साधन कृत तप प्रवृत्तिकारणमुच्यते श्रूयताम इत्यर्थ ॥ ५२ ॥

इत्थन ऋङ्गसङ्कल्पो जागर कृशता रति। क्रीत्यागो-

१ उष्णम् आतप वारयति इति उष्णवारणम।

२ तप साधन साध्यते अनेन इति साधनम् (करणे ल्युट्) तपस साधनम।

३ अधिश्रिय अधि अधिका श्री येषा ते तान्।

अरूपहार्य्यं मदनस्य निग्रहात्
पिनाकपाणिं पतिमाप्तुमिच्छति ॥ ५३
असह्यहुङ्कारनिवर्त्तित १ पुरा
पुरारिमप्राप्तमुख शिलीमुख ।
इमा हृदि व्यायतपातमक्षिणोत्
विशीर्णमूर्त्तेरपि२ पुष्पधन्वन ॥ ५४ ॥

आदमूर्च्छान्ता इत्यनङ्गदशा दश।' इति तत्र अस्या काश्चि दशा क्रममनादृत्यैव योजयति इयमित्यादिभि षड्भि श्लोके, इयमिति। मानिनी इन्द्राणीप्रभृतीरतिशय्य वर्त्ति-तव्यम इति अभिमानवती इय पार्व्वती अधिश्रिय अधिकेश्व र्य्यान् महेन्द्रप्रभृतीन् इन्द्रादीन् चतसृणा दिशाम् ईशान् इन्द्रवरुणयमकुवेरान् 'तद्धितार्थ इत्यादिना उत्तरपदसमास अवमत्य अवधूय मदनस्य निग्रहात् निवर्हणात हेतो अका मुकत्वात् इत्यथ रूपेण सौन्दर्य्येण हार्य्य वशीकरणीय न भवति इति अरूपहार्य्य पिनाक पाणौ यस्य त पिनाकपाणि हरम् प्रहरणार्थेभ्य परे निष्ठासप्तम्यौ भवत, इति साधु। पति भर्त्तारम् आप्तुम इच्छति, एतेन सङ्कल्पावस्था सूचिता ॥ ५३ ॥

असह्येति। पुरा पूर्व्वम असह्येन सोढम् अशक्येन हुङ्का रेण रौद्रेण निवर्त्तित अत एव परारि हरम् अप्राप्तमुख अ प्राप्तफल विशीर्णमूर्त्ते नष्टशरीरस्य अपि पष्पधन्वन कामस्य शिलीमुख बाण इमा पार्व्वती हृदि व्यायत सदूरावगाढ इति यावत्, तादृक् पात प्रहार यस्मिन् कर्म्मणि तत् तथा

१ निवर्त्तित विमुखता नीत ।

२ विशीर्णमूर्त्ते विशीर्णा मूर्त्ति यस्य स तस्य ।

तदा प्रभृत्युन्मदना पितुर्गृहे
ललाटिकाचन्दनधूसरालका।
न जातु बाला लभते स्म निर्वृतिं
तुषारसङ्घातशिलातलेष्वपि॥ ५५॥
उपात्तवर्णे चरिते पिनाकिन
सबाष्पकण्ठस्खलितैः पदैरियम्।

अचिरोत् अकरोत् दग्धदेहस्यापि मार्गणो लग्न स्मरः सर्व्वत्र बाध्यते इति भाव। अनेन विरहवती शैलसुतापि भावमित्य लोक चच प्रीतिमन सङ्गाख्यमवस्थाद्वयमनन्तरावस्थोपयोगितया अनूद्य कार्श्यावस्था सूचिता॥ ५४॥

तदेति। तदा इति छेद तदा प्रभृति तत आरभ्य इत्यर्थ। सप्तम्यर्थस्यापि दाप्रत्ययस्य पञ्चम्यर्थे लक्षणया प्रभृतियोगे पञ्चमी नियमात्। पितु गृहे उन्मदना उत्कटमन्मथा ललाटस्य अलङ्कार ललाटिका तिलक 'कर्णललाटात् कन् अलङ्कारे' इति कनप्रत्यय। तस्या चन्दनेन धूसरा धूसरवर्णा अलका चूर्णकुन्तला यस्या सा तथोक्ता बाला पार्व्वती जातु कदाचित अपि तुषारसङ्घाता तुषारघना ते एव शीला तासा तलेषु उपरिभागेषु अपि निर्वृति सुख न लभते स्म, एतेना रत्यपरमाच्च विषयविद्वेषावस्था द्वादशावस्थापक्षे सञ्ज्वरस्य व्यज्यते॥ ५५॥

उपात्तेति। पिनाकिन शम्भो चरिते त्रिपुरविजयादि चेष्टिते उपात्तवर्णे प्रारब्धगीतक्रमे 'गीतक्रमे स्तुतौ वेदे वर्ण शब्द प्रयुज्यते' इति हलायुध। सबाष्पे गद्गदे कण्ठे स्खलिते विशीर्णे पदै सुप्तिङन्तरूपै करणै वनान्ते सङ्गीतेन निमित्तेन सखी वयस्या किन्नरराजकन्यका अनेकश बहुश अरोदयन् अश्रुमोचनम् अकारयत। हरचरितगानजनितमन्न

अनेकशः किन्नरराजकन्यका
वनान्तसङ्गीतसखीररोदयत् ॥ ५६ ॥
त्रिभागशेषासु निशासु च क्षणं
निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ व्रजसीत्यलक्ष्यवाक्
असत्यकण्ठार्पितबाहुबन्धना ॥ ५७ ॥
यदा बुधैः सर्व्वगतस्त्वमुच्यसे
न वेत्सि भावस्थमिमं कथं जनम् ।

[illegible] रुरुदुरिति भावः । अत्र वर्ण-
[illegible] पुनः पुनस्तत्कारणीभूतमूर्च्छावस्थाप्रद-
र्शितो व्यज्यते, अन्यथा सखीरोदनानुपपत्तेरिति । द्वादशावस्था-
पक्षे तु प्रलापावस्था च व्यज्यते प्रलापो गुणकीर्त्तनम् इति
आलङ्कारिकाः ॥ ५६ ॥

त्रिभागेति । [illegible] ति चार्थः, भिद्यते इति शेषः । कस्यांचि-
[illegible] । त्रिभागेन शेषासु अवशिष्टासु । यद्वा रात्रेस्त्रियाम-
त्वेन प्रसिद्धत्वात् तृतीयो भागः त्रिभागः संख्याशब्दस्य वृत्ति-
विषये पूरणार्थत्वात् यथा [illegible] सहस्रांश इति
त्रिभागः शेषो यासां तासु निशासु [illegible] नेत्रे निमील्य
मीलयित्वा सहसा [illegible] हे नीलकण्ठ । क्व व्रजसि ? कुत्र
गच्छसि ? इति अलक्ष्या निर्विषया वाक् वचनं यस्याः सा
तथोक्ता तथा असत्ये मिथ्याभूते कण्ठे अर्पितं बाहुबन्धनं
यया सा तथा सती व्यबुध्यत विबुद्धवती, एतौ जागरो-
न्मादौ दर्शितौ ॥ ५७ ॥

स्वप्नान्तरे [illegible]

इति स्वहस्तोल्लिखितश्च मुग्धया
रहस्युपालभ्यत चन्द्रशेखरः ॥ ५८ ॥
यदा च तस्याधिगमे जगत्पते
रपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरो-
रियं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥
द्रुमेषु सख्या कृतजन्मसु स्वयं
फलं तपःसाक्षिषु दृष्टमेष्वपि ।

क्षिणा विनोदा, तत्र सम्प्रमन्दर्शनभुक्ता प्रतिकृतिदर्शन माह यदेति। यदा यत इत्यन्वयः। यदेति ज्ञतौ"ग। व्याख्यान अस्योपाहृतत्वात्। त्व बुधे मनीषिभि सर्वगत सर्व व्यापी इति उच्यसे। तत इत्यध्याहार। माने वत्यारभ्य निश्चित इति भावस्य त्वय्यनुरागिणम् इत्यर्थ इम जनम इमामिति आत्मनिर्देश। कथ न वेत्सि न जानासि इति मुग्धया मूढया अकिञ्चित्करत्वेन उपालम्भ इत्यजानानया इत्यर्थ, तया स्वहस्तेन उल्लिखित चित्रे लिखित चन्द्रशेखर रहसि एकान्ते सख्या ।(असमक्षम इत्यर्थ) उपालभ्यत साधिक्षेपम् उक्तम् उक्तम उक्तसमचयाथयकार यद्यपि रहसीत्युक्त तथापि सखीसमक्ष करणात् ज्ञात्यागो व्यज्यते एव ॥ ५८ ॥

यदेति। जगत्पत तस्य ईश्वरस्य अधिगमे प्राप्तौ अन्य विधिम् उपाय विचिन्वती मृगयमाणा यदा न अपश्यत तदा इय पार्वती गुरो पितु अनुज्ञया अस्माभि सह तपसे तप चरितु तपोवन प्रपन्ना प्राप्ता ॥ ५९ ॥

द्रुमेष्विति। सख्या पार्वत्या स्वय कृत जन्म येषा तेषु स्वय

न च प्ररोहाभिमुखोऽपि दृश्यते
मनोरथोऽस्याः शशिमौलिसंश्रयः१ ॥ ६० ॥
न वेद्मि स प्रार्थितदुर्लभः कदा
सखीभिरस्रोत्तरमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं
वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥

रोपितेषु इत्यर्थः तपसः साक्षिषु साक्षात् द्रष्टृषु एषु द्रुमेषु अपि फलं दृष्टं लब्धं जनितम् इत्यर्थः । अस्याः पार्व्वत्याः शशिमौलिसंश्रयः चन्द्रशेखरविषयः मनोरथः तु प्ररोहाभिमुखः अङ्कुरोन्मुखः अपि न दृश्यते । 'प्ररोहस्त्वङ्कुरः' इति वैजयन्ती । स्वयं रोपितवृक्षफलकालेऽपि अस्याः मनोरथस्य नाङ्कुरोदयोऽप्यस्ति फलाशा तु दूरापास्ता इत्यर्थः ॥ ६० ॥

न वेद्मीति । प्रार्थितः सन् दुर्लभः प्रार्थितदुर्लभः सः देवः तपःकृशां तपसा कृशां क्षीणाम् अत एव सखीभिः अस्रोत्तरम् अश्रुप्रधानं यथा भवति तथा ईक्षिताम् इमां मे सखीं तस्य इन्द्रस्य अवग्रहेण अनावृष्ट्या क्षतां पीड़िताम् । "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः । अवग्रहः वर्षप्रतिबन्धः इत्यर्थः सीतां कृष्टभुवम् । 'सीता लाङ्गलपद्धतिः' इत्यमरः । वृषा वासवः इव । 'वासवो वृत्रहा वृषा' इत्यमरः । कदा अभ्युपपत्स्यते कदा अनुग्रहीष्यति न वेद्मि । अत्र वाक्यार्थः कर्म । तदवग्रहक्षतामित्यत्र अवग्रहक्षतामित्यनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेः तदिति भिन्नं पदं वेद्मीत्यस्य कर्म्म इति वक्तमुचिताश्याम् ॥ ६१ ॥

१ शशी मौलौ यस्य सः शशिमौलिः सः संश्रयः विषयः यस्य सः । संश्रीयते असौ इति संश्रयः । कर्म्मणि अल् ।

अगूढसद्भावमितीङ्गितज्ञया¹
निवेदितो नैष्ठिकसुन्दरस्तया।
अयीदमेव परिहास इत्युमाम्
अपृच्छदव्यञ्जितहर्षलक्षण. ॥ ६२ ॥
अथाग्रहस्ते मुकुलीकृताङ्गुलौ²
समर्पयन्ती स्फटिकाक्षमालिकाम्।

अगूढेति। इङ्गितज्ञया पार्व्वतीहृदयाभिज्ञया 'इङ्गित चेष्टितो भाव' इति सज्जन। तया गौरीसख्या इति एवम् अगूढसद्भाव प्रकाशितसदभिप्राय यथा तथा निवेदित ज्ञापित निष्ठा मरणम् अवधि यस्य स नैष्ठिक यावज्जीवब्रह्मचारी सुन्दर विलासी नैष्ठिकश्च असौ सुन्दरश्च इति तथोक्त द्वयोरन्यतरस्य विशेषणत्वविवक्षाया विशेषणसमास। किन्तु नैष्ठिकत्वविशेषणेन कामित्वविरोध अथवा देवस्य अलौकिक महिमत्वादुभय तात्त्विकमिति न विरोध। अव्यञ्जित हर्ष लक्षण मुखरागादि हर्षलिङ्ग यस्य तथाभूत सन अयि गौरि। अयीति कोमलामन्त्रणे, इद त्वत्सखीभाषितम एव सत्य किम् इत्यर्थ। परिहास केलि वा 'द्रवकेलिपरिहासा इत्यमर। इति एवम् उमाम् अपृच्छत् पृष्टवान्॥ ६२॥

अथेति। अथ अनन्तरम अद्रे तनया पार्व्वती मुकुलीकृताङ्गुलौ सम्पुटीकृताङ्गुलौ अग्रश्च असौ हस्तश्च इति समानाधिकरणसमास। 'हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदात्' इति

१ अगूढसद्भावम् अगूढ सद्भाव यस्मिन तत्। इङ्गितज्ञया इङ्गित जानाति या सा तया।

२ मुकुलीकृता अङ्गुलय यस्य स तस्मिन।

कथञ्चिदद्रेस्तनया मिताक्षर
चिरव्यवस्थापितवागभाषत ॥ ६३ ॥
यथा श्रुतं वेदविदां[1] वर त्वया
जनोऽयमुच्चै पदलङ्घनोत्सुक ।
तप किलेद तदवाप्तिसाधन
मनोरथानामगतिर्न विद्यते ॥ ६४ ॥
अथाह वर्णी विदितो महेश्वर
तदर्थिनी त्व पुनरेव वर्त्तसे ।

वामन । तस्मिन् अग्रहस्ते स्फटिकानाम् अक्षमालिका जप मालिकाम् अर्पयन्ती आमुञ्चन्ती कथञ्चित् महता कष्टेन चिर व्यवस्थापितवाक् चिरेण स्वीकृतवाक एतेन लज्जोपरोधो व्यज्यते मिताक्षर परिमितवर्ण यथा तथा अभाषत बभाषे ॥ ६३ ॥

किमुवाचेत्याह, यथेति। हे वेदविदा वर। वैदिकश्रेष्ठ। त्वया यथा श्रुत सम्यक् श्रुतम्। श्रुतार्थमेवाह, अय जन स्वयम् इत्यर्थ उच्चे पदस्य शिवलाभरूपोन्नतस्थानस्य लङ्घने आक्रमणे उत्सुक । किमत्रायुक्तमित्यत्राह,इद तप तदवाप्ते तस्य उच्चै पदस्य अवाप्ते प्राप्ते साधन किल। किलेत्यलीके। अतितुच्छत्वादसाधक मेव इत्यर्थ । तर्हि त्यज्यतामित्याशङ्क्य दुराशा मा न मुञ्चती त्याशयेनाह मनोरथाना कामानाम् अगति अविषय न विद्यते न हि स्वशक्तिपर्य्यालोचनया कामा प्रवर्त्तन्ते इति भाव ॥६४॥

अथेति। अथ वर्णी ब्रह्मचारी वर्णिनो ब्रह्मचारिण इत्यमर । आह उवाच इत्यर्थ । आहेति भूतार्थे लट्प्रयोगो भ्रान्तिमूल इत्याह वामन । किमित्याह, महेश्वर महादेव

---

१ वेद विदन्ति ये ते वेदविद तेषाम। विद्धातो कर्त्तरि क्विप ।

अमङ्गलाभ्यासरतिं[१] विचिन्त्य तं
तवानुवृत्तिं न च कर्त्तुमुत्सहे ॥ ६५ ॥
अवस्तुनिर्बन्धपरे कथं नु ते
करोऽयमामुक्तविवाहकौतुकः ।
करेण शम्भोर्वलयीकृताहिना[२]
सहिष्यते तत्प्रथमावलम्बनम् ॥ ६६ ॥

विदित त्वया ज्ञायते इत्यर्थः । बुद्ध्यर्थत्वाद् वर्त्तमाने क्तप्रत्ययः, तद्योगात् षष्ठी च। येन त्वं प्राक् भग्नमनोरथा कृता इति भावः । पुनः एव त्वं तम् ईश्वरम् अर्थयते तदर्थिनी एव तत्कामा एव प्रवर्त्तसे तत्प्रभावमनभूयापि इति भावः । अनुसरणे को दोषस्तत्राह,अमङ्गलाभ्यासे अमङ्गलाचारे रतिः यस्य तं तथोक्तं तम् ईश्वरं विचिन्त्य विचार्य्य तव अनुवृत्तिम् अनुसरणं कर्त्तुं न उत्सहे न अनुमन्तुं शक्नोमि इत्यर्थः ॥ ६५ ॥

अवस्त्विति । अवस्तुनि तुच्छवस्तुनि निर्बन्धः अभिनिवेशः परं प्रधानं यस्याः तस्याः सम्बुद्धिः अवस्तुनिर्बन्धपरे। पार्व्वति आमुक्तम् आसञ्जितं विवाहे यत् कौतुकं हस्तसूत्रं तत् यस्य सः ते अयं करः 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' इति शाश्वतः । वलयीकृताहिना भूषणीकृतसर्पेण शम्भोः महादेवस्य करेण करणभूतेन तत् एव प्रथमं तत्प्रथमम् अपरिचितत्वादतिभयङ्करम् इति भावः, तत् च तत् अवलम्बनं ग्रहणं च इति कथं नु सहिष्यते न कथञ्चिदपि सहिष्यते इत्यर्थः । अग्रतो यद्भाभि तत् दूरेऽवातष्ठता प्रथमं करग्रह एव दुःसह इति भावः ॥ ६६ ॥

---

१ रतिः अनुरागः ।

२ वलयीकृताहिना न वलयः कृतः अहिः सर्पः यस्मिन् सः तेन ।

त्वमेव तावत् परिचिन्तय स्वयं
  कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं कलहंसलक्षणं१
  गजाजिनं शोणितबिन्दुवर्षि च ॥ ६७ ॥
चतुष्कपुष्पप्रकरावकीर्णयोः
  परोऽपि को नाम तवानुमन्यते२ ।

त्वमेवेति। हे गौरि! त्वम् एव स्वयम् आत्मना तावत् इति मानार्थं यावन्मात्रं विचारणीयं तावन्मात्रम् इत्यर्थः। इदमेवो दाहृतञ्च गणव्याख्याने। परिचिन्तय पर्य्यालोचय। किमिति? कलहंसलक्षणं कलहंसचिह्नम्। 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः। वध्वा नवोढायाः दुकूलं वधूदुकूलम् 'वधूः स्नुषा नवोढा स्त्री' इति विश्वः। तथा शोणितबिन्दून् वर्षति इति तथोक्तम् आर्द्रम् इत्यर्थः। गजाजिनं च कृत्तिवासस्य तव पिनाकिन इत्याशयः। एते कदाचित् जातु अपि योगं सङ्गतिम् अर्हतः यदि? अर्हतः किम्? एतत् त्वमेव चिन्तय इति पूर्व्वेण अन्वयः। पाणिग्रहणकाले किल वधूवरयोर्वस्त्रान्तग्रन्थिः क्रियते कृत्तिवाससा पाणिपीडने तु दुकूलधारिण्यास्तव स कथं सङ्घटिष्यते इति भावः ॥ ६७ ॥

चतुष्केति। चतुष्के गृहविशेषे यः पुष्पप्रकरः तत्र अवकीर्णयोः न्यस्तयोः कुसुमास्तृतदिव्यभवनभूसञ्चारोचितयोः इत्यर्थः। तव पादयोः अलक्तकाङ्कानि लाक्षारञ्जितानि पदानि

१ कलहंसाः दुकूलप्रान्तेषु चित्रिता स्यूता वा इति शेषः लक्षणानि चिह्नानि यस्य तत्।

२ अनुमन्यते अनुजानाति।

अलक्तकाङ्कानि पदानि पादयो
विकीर्णकेशासु परेतभूमिषु[१] ॥ ६८ ॥
अयुक्तरूप किमत परं वद
त्रिनेत्रवक्ष सुलभ तवापि यत्।
स्तनद्वयेऽस्मिन् हरिचन्दनास्पदे
पद चिताभस्मरज करिष्यति ॥ ६९ ॥

पादाकाराणि पादन्यासचिह्नानि। पद शब्दे च वाक्ये च व्यवसायापदेशयो । पादतच्चिह्नयो इति विश्व । विकीर्णा विच्छिन्ना केशा शवशिरोरुहा यासु तासु विकीर्णकेशासु 'अतन्त्र्य तत्र दृष्टस्य' इति वचनात् 'स्वाङ्गाच्चोपसर्ज्जनाद-सयोगोपधात' इति विकल्पान्न ङीप। परेतभूमिषु प्रेतभूमिषु श्मशानेषु इत्यर्थ पर अपि खलु अपि क नाम अनुमन्यते? न कोऽपि इत्यर्थ । नामेति कुत्सायाम। पिनाकपाणिपाणि ग्रहणे तस्य परेतभूसञ्चारित्वेन साहचर्य्यात तवापि तत्र सञ्चारोऽवश्यम्भावी इति भाव ॥ ६८ ॥

अयुक्तेति। त्रिनेत्रवक्ष त्र्यम्बकालिङ्गनम् इत्यर्थ । तव तत्सम्बन्धितया सुलभम् अपि सुप्राप च भवति इति शेष । तव इति शेषे षष्ठी 'न लोकाव्यय इत्यादिना कृद्योगलक्षणे षष्ठ्या निषेधात्। अत परम् अस्मात् त्रिनेत्रवक्षोलाभात् अन्यत् अयुक्त-रूपम् अत्यन्तायुक्त कि वद न किञ्चित् इत्यर्थ । 'प्रशसाया रूपप्' इति रूपप्प्रत्यय । कुत ? यत यस्मात कारणात् हरि-चन्दनास्पदे हरिचन्दनस्य आस्पदे स्थानभूते अस्मिन् स्तनद्वये

१ परेता इति परापूर्वात् इणधातो कर्त्तरि क्त ।

इयञ्च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्य्यया१
विलोक्य वृद्धोक्षमधिष्ठितं२ त्वया
महाजनः स्मेरमुखो३ भविष्यति ॥ ७० ॥
द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया पिनाकिनः ।

चिताभस्म श्मशानभस्म ततः एव रजः चूर्णं कर्तृ पदं करिष्यति पदं निधास्यति भर्तुर्भवस्य भस्माङ्गरागात् इति भावः ॥ ६९ ॥

इयमिति। इयं च ते तव पुरतः आदौ एव अन्या विडम्बना परिहासः इत्यर्थः । का सेत्यत्राह, ऊढया परिणीतया । वहेः कर्म्मणि क्तः । वारणराजहार्य्यया गजेन्द्रवाह्यया त्वया अधिष्ठितम् आरूढं वृद्धम् उक्षाणं वृद्धोक्षम् 'अचतुर' इत्यादिना निपातः । विलोक्य महाजनः साधुजनः स्मेरमुखः स्मितमुखः भविष्यति उपहसिष्यति यत्, इयमिति पूर्व्वेण सम्बन्धः । स्मेरेति 'नमिकम्पिस्म्यजस' इत्यादिना रप्रत्ययः ॥ ७० ॥

द्वयमिति। पिनाकिनः ईश्वरस्य समागमप्रार्थनया प्राप्तिकामनया क्रियमाणया इति शेषः । सम्प्रति द्वयं शोचनीयतां शोच्यत्वं गतम्। किं तदाह, सा प्रागेव हरशिरोगता। अत्र अतिप्रसिद्धार्थत्वान्न यच्छब्दापेक्षा । तदुक्तं काव्यप्रकाशे, 'प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते' इति ।

१ वारणानां राजा वारणराजः तेन हार्य्या तया। हृधातोः कर्म्मणि ण्यत् ।

२ वृद्धोक्षः इव उक्षा वृद्धोक्षः तम् ।

३ स्मेरं सहासं मुखं यस्य सः । स्मिधातोः कर्त्तरि रः ।

कला च सा कान्तिमती[१] कलावत
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ ७१ ॥
वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि[२] मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ॥ ७२ ॥

कान्तिमत । नित्ययोगे मतुप् । कलावत चन्द्रस्य कला षोडश भागश्च अस्य लोकस्य नेत्रकौमुदी नेत्रानन्दिनी इत्यर्थ त्वञ्च कान्तिमतीत्वनेत्रकौमुदीत्वविशेषणयोरुभयत्राप्यन्वय । प्रागेकैव शोच्या सम्प्रति तु त्वमप्यपरेति द्वय शोच्यमिति पिण्डितार्थ शोच्यत्वञ्च निकृष्टाश्रयणात इति भाव ॥ ७१ ॥

कन्या वरयते रूप माता वित्त पिता श्रुतम । बान्धवा कुल मिच्छन्ति मिष्टान्नमितरे जना ॥' इति लोकानामाभाषणकम । तत्र किञ्चिदपि नास्तीत्याह, वपरिति । वपु तावत अस्य विरूपाणि विकृतरूपाणि अक्षीणि नेत्राणि यस्य तत विरू पाक्षम् 'बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात् षच् इति षच्प्रत्यय । वैरूप्यञ्च त्रिनेत्रत्वादिति क्षीरस्वामी। अतो न सौन्दर्य्यवार्त्तापि इत्यर्थ । अलक्ष्यम अज्ञात जन्म यस्य तस्य भाव तत्ता कुलमपि न ज्ञायते इत्यर्थ । अलक्षिता जनि इति पाठे जनि उत्पत्ति अलक्षिता न ज्ञाता । 'जनिरुत्पत्तिरुद्भव' इत्यमर । वसु वित्त दिगम्बरत्वेनैव निवदित नास्तीति ज्ञापितम् इत्यर्थ । यदि वित्त भवति यदा कथ दिगम्बरो भवति अतो द्वय

१ कान्ति विद्यते यस्या सा शोभाशालिनी ।

२ बालमृगस्य इव अक्षिणी यस्या सा तत सम्बोधने । बालेति विशेषण नयनयोश्चपलताद्योतनार्थम ।

निवर्त्तयास्मादसदीप्सितान्मनः
क्व तद्विधस्त्वं क्व च पुण्यलक्षणा[१]।
अपेक्ष्यते साधुजनेन वैदिकी
श्मशानशूलस्य न यूपसत्क्रिया॥ ७३॥
इति द्विजातौ प्रतिकूलवादिनि[२]
प्रवेपमानाधरलक्ष्यकोपया।

निर्धनोऽयमिति। किं बहुना हे बालमृगाक्षि। पार्व्वति। वरेषु वोढृषु। 'वरो जामातृवोढारौ' इति विश्वः। यत् रूपवित्तादिकं मृग्यते कन्यातद्बन्धुभिरन्विष्यते तत् त्रिलोचने त्र्यम्बके व्यस्तम् एकम् अपि समस्तं मा भूत् इति भावः अस्ति किम्? नास्त्येव इत्यर्थः॥ ७२॥

निवर्त्तयेति। अस्मात् असदीप्सितात् अनिष्टमनोरथात् मनः निवर्त्तय निवारय सा पूर्व्वोक्ता विधा प्रकारः यस्य तथोक्तः अमङ्गलशील इत्यर्थः क्व? महदन्तरम् इत्यर्थः पुण्यलक्षणा प्रशस्तभाग्यचिह्ना त्वं च क्व? अतः न तवायमर्हः इत्यर्थः। तथाहि, साधुजनेन 'साधुर्वार्द्धुषिके चारौ सज्जने चाभिधेयवत्' इति विश्वः। श्मशानशूलस्य श्मशानभूमिनिखातस्य वध्यशङ्कोः वैदिकी वेदोक्ता यूपः नाम पशुबन्धनसाधनभूतः संस्कृतदारुविशेषः तस्य सत्क्रिया प्रोक्षणाभ्युक्षणादिसंस्कारः यूपसत्क्रिया न अपेक्ष्यते न इष्यते। यथा श्मशानशूले यूपसत्क्रिया न क्रियते तथा त्वमपि तस्मै न घटसे इति तात्पर्य्यार्थः॥ ७३॥

इतीति। इति एवंप्रकारेण द्विजातौ द्विजे प्रतिकूलवादिनि सति प्रवेपमानेन चञ्चलेन अधरेण अधरोष्ठेन लक्ष्यः अनुमेयः

१ पुण्यानि लक्षणानि यस्याः सा।

२ प्रतिकूलं विरुद्धं वदति यः यः तस्मिन्। वर्त्तते कर्त्तरि णिन्।

विकुञ्चितभ्रूलतमाहिते तया
विलोचने तिर्य्यगपान्तलोहिते१ ॥ ७४ ॥
उवाच चैनं परमार्थतो हर
न वेत्सि नून यत एवमात्थ माम् ।
अलोकसामान्यमचिन्त्यहेतुक२
द्विषन्ति मन्दाश्चरित महात्मनाम् ॥७५॥
विपत्प्रतीकारपरेण३ मङ्गल
निषेव्यते भूतिसमुत्सुकेन वा ।

कोप क्रोध यस्या तया तथोक्तया तया पार्व्वत्या उपान्त लोहिते प्रान्तरक्ते विलोचने विकुञ्चिते कुटिलिते भ्रूलते यस्मिन न्त तथा सभ्रूभङ्गम इत्यर्थ । तिर्य्यक् साचि आहिते निहिते अनादरात तिर्य्यग्गैच्यत इत्यर्थ ॥ ७४ ॥

उवाचेति । अथ एनं ब्रह्मचारिणम् उवाच च। किमिति ? परमार्थत तत्त्वत हर न वेत्सि न जानासि नूनम्। कुत ? यत माम एवम उक्तया रीत्या आत्थ ब्रवीषि। 'ब्रुव पञ्चा नामादित' इति रूपसिद्धि । अज्ञानादेवाय शिवद्वेषस्तवेत्याशये नाह, मन्दा मूढा 'मूढाल्पापटुनिर्भाग्या मन्दा' इत्यमर । लोकसामान्यम इतरजनसाधारण न भवति इति अलोक सामान्यम अचिन्त्यहेतुकं दुर्बोधकारणक महात्मना चरित द्विषन्ति हेत्वपरिज्ञानात् दूषयन्ति, विद्वासस्तु कोऽप्यत्र हेतु रस्तीति बहु मन्यते इत्यर्थ ॥ ७५ ॥

सम्प्रत्यमङ्गलाभ्यासरतिमित्याद्युक्तदूषणजात विपदित्या

१ उपान्तलोहिते उपान्तयो प्रान्तभागयो लोहिते रक्ते ।
२ अचिन्त्यहेतुकम अचिन्त्य हेतु यस्य तत ।
३ विपदा प्रतीकार स एव पर प्रधान यस्य तेन ।

जगच्छरण्यस्य निराशिष.१ सत
किमेभिराशोपहतात्मवृत्तिभि. ॥ ७६ ॥
अकिञ्चन सन् प्रभव स सम्पदां
त्रिलोकनाथ पितृसद्मगोचर ।

दिभि षड्भि श्लोकै परिहर्तुमारभते, विपदिति । विपत्प्रती कारपरेण अनर्थपरिहारार्थिना इत्यर्थ । 'उपसर्गस्य घञ्मनुष्येषु बहुलम्' इति दीर्घ । भूतिसमुत्सुकेन ऐश्वर्यकामेन वा मङ्गल गन्धमाल्यादिक निषेव्यते । अरणे रक्षणे साधु अरण्य 'तत्र साधु' इति यत्प्रत्यय । 'अरण गृहरक्षित्रो' इत्यमर । जगत अरण्य तस्य जगच्छरण्यस्य निराशिष निरभिलाषस्य सत शिवस्य 'आशीरुरगदंष्ट्राया विप्रवाक्याभिलाषयो' इति शाश्वत । आशया तृष्णया उपहता दूषिता आत्मवृत्ति अन्त करणवृत्ति येषा ते एभि मङ्गलै किम्? वृथा इत्यर्थ । पूर्व मङ्गलमित्येकवचनस्य जात्यभिप्रायत्वादेभिरिति बहुवचनेन परामर्शो न विरुध्यते । इष्टावाप्त्यनिष्टपरिहारार्थिनो हि मङ्गलाचारनिर्बन्ध तदुभयासक्तस्य तु यथाकथञ्चिदास्ता को दोष इत्यर्थ । एतेनामङ्गलाभ्यासरतिमित्युक्त प्रत्युक्तम ॥ ७६ ॥

अकिञ्चन इति । स हर न विद्यते किञ्चन द्रव्य यस्य स अकिञ्चन दरिद्र सन सम्पदा प्रभवति अस्मात् इति प्रभव कारण पितृसद्मगोचर श्मशानाश्रय सन त्रयाणा लोकाना नाथ 'तद्धितार्थ' इत्यादिना उत्तरपदसमास । स देव भीमरूप भयङ्कराकार सन शिव सौम्यरूप इति उदीर्यते उच्यते। अत पिनाकिन हरस्य यथाभूत अर्थ

१ आशास्यते इति आशी । आङ्पर्वात् शास्धातो कर्मणि क्विप । नि नास्ति आशी आशास्य यस्य स तस्य ।

स भीमरूपः शिव इत्युदीर्य्यते[1]
न सन्ति याथार्थ्यविदः पिनाकिनः ॥ ७७ ॥
विभूषणोद्भासि[2] पिनद्धभोगि[3] वा
गजाजिनालम्बि[4] दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरम्
न विश्वमूर्त्तेरवधार्य्यते वपुः ॥ ७८ ॥

यथार्थं तस्य भावः याथार्थ्यं तत्त्वं तस्य विदः न सन्ति। लोकोत्तरमहिम्नो निर्लेपस्य यथाकथञ्चिदवस्थानं न दोषाय इति भावः । एतेन अवस्तुनिबन्धपरे इति श्लोकोक्तं परिहृतं वदितव्यम् ॥ ७७ ॥

देवस्य लौकिकमलौकिकञ्च प्रसाधनं नास्तीत्याशयेनाह, विभूषणेति। विश्वं मूर्त्तिः यस्य इति विश्वमूर्त्तेः अष्टमूर्त्तेः शिवस्य वपुः शरीरं भूषणैः उद्भासते इति भूषणोद्भासि स्यात् पिनद्धभोगि आसक्तभुजङ्गमं वा स्यात्। पिनद्धेति नह्यतेरपि पूर्व्वात् कर्म्मणि क्तः, 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति अकारलोपः । गजाजिनालम्बि स्यात् अथवा दुकूलधारि स्यात्। कपालम् अस्य अस्ति इति कपालि ब्रह्मशिरःकपालशेखरं वा स्यात् इन्दुशेखरं वा स्यात् न अवधार्य्यते न निर्द्धार्य्यते सर्व्वं सम्भवति इत्यर्थः । एतेन त्वमेव तावदिति श्लोकोक्तं प्रत्युक्तमिति ज्ञेयम् ॥ ७८ ॥

१ उदीर्य्यते । उत्पूर्व्वात् ईरयतेः चौरादिकात् कर्म्मणि लट् ।

२ आभरणैः विभूषणैः शोभमानम् इत्यर्थः ।

३ भोगः भुजङ्गमशरीरं स विद्यते येषां ते भोगिनः सर्पाः । अस्त्यर्थे इनः । पिनद्धाः भोगिनः यत्र तत् ।

४ गजस्य अजिनं चर्म्म आलम्बते धारयति यत् तत् ।

तदङ्गसंसर्गमवाप्य१ कल्पते
ध्रुवं चिताभस्मरजो विशुद्धये।
तथाहि नृत्याभिनयक्रियाच्युतं
विलिप्यते मौलिभिरम्बरौकसाम्२ ॥ ७९ ॥
असम्पदस्तस्य वृषेण गच्छतः
प्रभिन्नदिग्वारणवाहनो वृषा।

अयुक्तरूप किमत पर वदेति श्लोकोक्त प्रत्याह तदङ्गेति। तस्य शिवस्य अङ्ग तस्य संसर्गम अवाप्य आसाद्य चिताभस्म एव रज विशुद्धये कल्पते अलं पर्याप्नोति इत्यर्थ। अलमर्थ योगात 'नम स्वस्तिस्वाहा' इत्यादिना चतुर्थी। अत्र शोधकत्व प्रमाणसिद्धम् इत्यर्थ। प्रमाणमेवाह तथा हि, प्रसिद्धमेव इत्यर्थ.. नृत्य ताण्डव य अभिनय अर्थव्यञ्जकचेष्टाविशेष स एव क्रिया तया निर्मितेन च्युत पतित चिताभस्मरज इति शेष। अम्बरौकसा देवाना मौलिभि विलिप्यते ध्रियते। अशुद्धं चेत कथमिन्द्रादिभिर्ध्रियेतेत्यर्थापत्तिरनुमान वा प्रमाणम इत्यर्थ ॥ ७९ ॥

यदुक्त दिगम्बरत्वेन निवेदित वसु, इयञ्च तेऽन्या पुरतो विडम्बनेत्यादि च तत्रोत्तरमाह, असम्पद इति। प्रभिन्न मद स्रावो दिग्वारण दिग्गज वाहन यस्य स ऐरावतेनोढ इत्यर्थ वृषा देवेन्द्र असम्पद दरिद्रस्य वृषेण गच्छत वृषभारूढस्य तस्य ईश्वरस्य पादौ मौलिना मुकुटेन उपगम्य प्रणम्य इत्यर्थ विनिद्राणा विकसिताना मन्दाराणा कल्पतरुकुसुमाना रजोभि परागै अरुणा रञ्जुलय ययो तौ

१ रूस। भस्मत।

२ अम्बरौकसाम् अम्बर स्वर्ग ओक स्थान येषा ते तेषाम।

करोति पादावुपगम्य मौलिना
विनिद्रमन्दाररजोऽरुणाङ्गुली[1] ॥ ८० ॥
विवक्षता[2] दोषमपि च्युतात्मना[3]
त्वयैकमीशं प्रति साधु भाषितम्।
यमामनन्त्यात्मभुवोऽपि कारणं
कथं स लक्ष्यप्रभवो[4] भविष्यति ॥ ८१ ॥
अलं[5] विवादेन यथा श्रुतस्त्वया
तथाविधस्तावदशेषमस्तु स ।

तथोक्तौ करोति। दिग्गजारोहिणामिन्द्रादीनामपि वन्द्यस्य इन्दुमौले किं सम्पदा, वृषारोहणे वा को दोष इत्यर्थ ॥८०॥

यदुक्तम् अलक्ष्यजन्मतेति तत्रोत्तरमाह, विवक्षतेति। च्युतात्मना नष्टस्वभावेन अत एव दोषं दूषणं विवक्षता वक्तुम् इच्छता अपि त्वया ईशं प्रति एकम् अलक्ष्यजन्मतेत्येतदेक मेव इत्यर्थ, साधु भाषितं सम्यक् उक्तम् कुतः? यम् ईश्वरम् आत्मभुव अपि ब्रह्मण अपि 'ब्रह्मात्मभूः सुरज्येष्ठ इत्य मर। कारणम् आमनन्ति उदाहरन्ति विद्वांस इति शेष। पाणिग्राह्यात्वादान' इत्यादिना मनादेश। स ईश्वर कथं लक्ष्यप्रभव लक्ष्यजन्मा भविष्यति, अनादिनिधनस्य भगवत कारणशङ्काकलङ्कस्य नान्विष्यते इत्यर्थं ॥ ८१ ॥

अलमिति। अथवा विवादेन कलहेन अलं, त्वया यथा

१ विनिद्राणि विगता निद्रा अविकाशभाव येषां तानि।
२ वचधातो सनन्तात शतृ तत तृतीयायां एकवचनम।
३ च्युत सन्मार्गात स्खलित इत्यर्थ आत्मा यस्य स तेन।
४ लक्ष्य ज्ञेय प्रभव यस्य स।
५ विवादो नैव कर्तव्य इत्यर्थ।

ममात्र भावैकरस मन स्थितं
न कामवृत्तिर्वचनीयमीक्षते१ ॥ ८२ ॥
निवार्य्यतामालि किमप्ययं वटु
पुनर्विवक्षु २ स्फुरितोत्तराधर.३।
न केवलं यो महतोऽपभाषते
शृणोति तस्मादपि य स पापभाक् ॥ ८३ ॥

येन प्रकारेण स ईश्वर श्रुत, अशेष कार्त्स्न्येन तथाविध तावत्प्रकार एव अस्तु। मम मनस्तु अत्र ईश्वरे भाव शृङ्गार एक अद्वितीय रस आस्वाद यस्य तत् तथा स्थितम्। तथा हि, कामवृत्ति स्वेच्छाव्यवहारो वचनीयम् अस्थानसङ्गापवाद न ईक्षते न विचारयति, न हि स्वेच्छासञ्चारिणो लोकापवादाद् बिभ्यति इति भाव ॥ ८२ ॥

निवार्य्यतामिति। हे आलि। सखि। 'आलि सखी वयस्या च' इत्यमर। स्फुरितोत्तराधर स्फुरणभूयिष्ठोष्ठ अयं वटु माणवक पुन किमपि विवक्षु वक्तुमिच्छु। ब्रुव सनन्ताद् उप्रत्यय। निवार्य्यताम्। ननु वक्तुमेवकथं न ददासीत्याह, तथा हि य महत पूज्यान् अपभाषते अपवदति न केवल स पापभाक् भवति इति शेष। किन्तु तस्मात् महतामपवादकात य शृणोति महदपवादकवाक्यम् इति शेष स अपि पापभागित्यनुषज्यते। अत्र स्मृति गुरो प्राप्त परीवाद न श्रोतव्य कथञ्चन। कर्णौ तत्र पिधातव्यौ गन्तव्य वा ततोऽन्यत ॥ इति ॥ ८३ ॥

---

१ कामवृत्ति कामेन स्वेच्छया वृत्ति व्यवहार यस्य स।

२ विवक्षु वच्धातो सनन्तात उ।

३ स्फुरित उत्तराधर ओष्ठ यस्य स।

इतो गमिष्याम्यथ वेति वादिनी
चचाल बाला स्तनभिन्नवल्कला।
स्वरूपमास्थाय च तां कृतस्मितः
समाललम्बे वृषराजकेतनः ॥ ८४ ॥

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती[1]।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ[2] ॥ ८५ ॥

सम्प्रति गन्तव्यपक्षमाश्रयते इत इति। अथ वा इतः अन्यत्र गमिष्यामीति वादिनी वदन्ती स्तनाभ्यां भिन्नवल्कला रय-वशात् कुचस्रस्तचीरा बाला पार्व्वती चचाल। वृषराजकेतनः वृषभध्वजश्च स्वरूपम् आस्थाय निजरूपम् आश्रित्य कृतस्मितः सन् तां पार्व्वतीं समाललम्बे जग्राह ॥ ८४ ॥

तमिति। तं देवं वीक्ष्य वेपथुमती कम्पवती सरसाङ्गयष्टिः स्विन्नगात्री, महादेवदर्शनेन देव्याः सात्त्विकभावोदय उक्तः। निक्षेपणाय अन्यत्र विन्यासाय उद्धृतम् उत्क्षिप्तं पदम् अङ्-घ्रिम् उद्वहन्ती शैलाधिराजतनया पार्व्वती मार्गे अचलः तस्य व्यतिकरेण समाहत्या अवरोधनेन इति यावत् आकुलिता सम्भ्रमिता सिन्धुः नदीव 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः। न ययौ न तस्थौ लज्जया इति भावः। वसन्ततिलकावृत्तमेतत् ॥ ८५ ॥

१ उद्वहन्ती तथैव धारयन्ती।

२ सम्भ्रमातिशयवशात् विकर्त्तव्यताविह्वला कमप्यवस्थाविशेषं प्राप्तेत्यर्थः।

अद्य प्रभृत्यवनताङ्गि तवास्मि दास
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ।
अह्नाय सा नियमजं क्लममुत्ससर्ज्ज¹
क्लेश फलेन हि पुनर्नवता विधत्ते॥ ८६॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
तप फलोदयो नाम पञ्चम सर्ग।

अद्येति। चन्द्रमौलौ शिवे हे अवनताङ्गि। पार्व्वति। अद्य प्रभृति अस्मात् दिनादारभ्य इत्यर्थ। प्रभृतियोगादद्येति सप्तम्यर्थवाचिना पञ्चम्यर्थो लक्ष्यते। तव तपोभि क्रीत। दासृङ दाने दासत आत्मान ददाति इति दास अस्मि इति वादिनि वदति सति सा देवी अह्नाय सपदि द्राक झटित्यञ्जसाह्नाय द्रागमङ्क्षु सपदि द्रुतम् इत्यमरः। नियमज तपोजन्य क्लम क्लेशम् उत्ससर्ज्ज फलप्राप्त्या क्लेश विसस्मार इत्यर्थ। तथा हि, क्लेश फलेन फलसिद्ध्या पुन नवता विधत्ते पूर्व्ववदेवाक्लिष्टतामापादयति इत्यर्थ। सफल क्लेशो न क्लेश इति भाव॥ ८६॥

इति श्रीमन्महामहोपाध्याय कोलाचलमल्लिनाथसूरि विरचितायां
कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां पञ्चम सर्ग।

---

१ उत्ससर्ज्ज तत्याज।

## षष्ठ सर्ग ।

अथ विश्वात्मने गौरी सन्दिदेश मिथ सखीम् ।
दाता मे भूभृता नाथ प्रमाणीक्रियतामिति ॥ १ ॥
तया व्याहृतसन्देशा[१] सा बभौ निभृता प्रिये ।

अथेति । अथ देवदेवानुग्रहानन्तर गौरी पार्व्वती विश्वम आत्मा स्वरूप यस्य इति विश्वस्य आत्मा इति वा विश्वात्मने शिवाय मिथ रहसि 'मिथोऽन्योन्य रहस्यपि' इत्यमर । सखी सन्दिदेश अतिससर्ज्ज । क्रियामात्रप्रयोगेऽपि सम्प्रदानत्वा चतुर्थी । किमिति? भूभृता नाथ हिमवान् मे मम दाता सन प्रमाणीक्रियताम् इति दातृत्वेन प्रमाणीक्रियताम् इत्यर्थ । प्रार्थनाया लोट । पित्रा दीयमानाया परिग्रहो मम मह्या ननुग्रह इति भाव ॥ १ ॥

तयेति । तया सख्या सखीमुखेन इत्यर्थ व्याहृतसन्देशा उक्तवाचिका प्रिये हरे विषये निभृता निश्चला परमासक्ता इत्यर्थ सा गौरी मधौ वसन्ते निभृता स्थिरा परभृतया कोकिलया उन्मुखी मुखरा परभृतोन्मुखी, मुखशब्देन अभि भाषणव्यापारो लक्ष्यते । तथा च परभृतामुखेन व्याहरन्ति इत्यर्थ । परभृतेति क्रियाशब्दविवक्षाया 'जातेरस्त्री' इति ङीप्प्रत्ययो न भवति । तयेत्युपमेयस्य व्यस्तत्वादुपमानस्य पर- भृताशब्दस्य समास सोढव्य । अथवा मृद्वरण सम्पदादित्वात

१ व्याहृत सन्देश यस्या सा ।

चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी ॥ २ ॥
स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।
ऋषीन् ज्योतिर्मयान्[१] सप्त सस्मार स्मरशासन ॥ ३ ॥
ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधना ।
सारुन्धतीका सपदि प्रादुरासन् पुर प्रभो ॥ ४ ॥
आप्लुतास्तीरमन्दार-कुसुमोत्किरवीचिषु ।

क्विप। परै भृत् यस्या तया परभृता इति व्यासेन व्याख्येयम्। पदमञ्जरीकारस्तु परे भ्रियते इति कर्म्मणि क्विपमाह। चूतयष्टि चूतशाखा इव अभ्यासे अन्तिके बभौ 'सदेशाभ्याससविधसमर्य्यादसवेशवत्। उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमर ॥ २ ॥

स इति। स प्रकृत शास्ति इति शासन । बहुलग्रहणात् कर्त्तरि ल्युट। स्मरस्य शासन ईश्वर तथा इति प्रतिज्ञाय तथा करिष्यामीत्युक्त्वा इत्यर्थ । उमा कथम् अपि कृच्छ्रेण विसृज्य तत्र गाढानुरागत्वात इति भाव। ज्योतिर्मयान तेजोरूपान सप्तर्षीन अङ्गिर प्रभृतीन् सस्मार स्मृतवान ॥ ३ ॥

त इति। ते तप एव धन येषा ते तपोधना सप्तर्षय प्रभामण्डलै तेज पञ्जै व्योम आकाश द्योतयन्त प्रकाशयन्त अरुन्धत्या सह वर्त्तन्ते इति सारुन्धतीका सन्त 'नद्यृतश्च इति कप्। सपदि प्रभो ईश्वरस्य पुर पुरोभागे प्रादुरासन् प्रत्यक्षा बभूवु ॥ ४ ॥

इत पर षड्भि श्लोकैस्तानेव मुनीन वर्णयति, आप्लुता

---

१ ज्योति तेज स्वरूपम् एषाम् इति ज्योतिर्मया तान। स्वार्थे मयट ।

व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु ॥ ५ ॥
मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कला.।
रत्नाक्षसूत्रा प्रव्रज्या कल्पवृक्षा इवाश्रिता' ॥ ६ ॥
अथ प्रस्थापिताश्वेन१ समावर्जितकेतुना।
सहस्ररश्मिना साक्षात् सप्रणाममुदीक्षिता२ ॥ ७ ॥

इत्यादिभि । उत्किरन्ति विक्षिपन्ति इति उत्किरा 'इग पध इत्यादिना कप्रत्यय । तीरे ये मन्दारा कल्पवृक्षा तेषा कुसुमानाम् उत्किरा वीचय तरङ्गा येषा तेषु दिङ्नागाना दिग्गजाना मदगन्ध येषु इति तथोक्तेषु व्योमगङ्गप्रवाहेषु आकाशगङ्गास्रोत सु आप्लुता स्नाता ॥ ५ ॥

मुक्तेति। मुक्ताना मौक्तिकाना यज्ञोपवीतानि मुक्ता मयानि इत्यर्थ बिभ्रत दधाना हेममयानि वल्कलानि येषा ते हेमवल्कला, रत्नमयानि अक्षसूत्राणि येषा ते रत्नाक्षसूत्रा प्रव्रज्या प्रव्रजनम् 'व्रजयजाभावे क्यप्' इति क्यप्। आश्रिता कल्पवृक्षा इव स्थिता। अत्र चतुर्थाश्रमवाचिना प्रव्रज्या शब्देन वानप्रस्थाश्रम लक्ष्यते जहु परिग्रहव्रीड़ा माजा पत्याखपस्विन इति सपत्नीकत्वाभिधानात् 'सुतविन्यस्त-पत्नीक तथा वानुगतोऽपि सन्' इति वानप्रस्थस्योभयथा स्मरणात् ॥ ६ ॥

अथ इति। अथ प्रस्थापिताश्वेन सूर्य्यमण्डलोपरिवर्त्ति त्वात् सप्तर्षिमण्डलस्य इति भाव समावर्ज्जितकेतुना तन्म ण्डलाघातशङ्कया नामितध्वजेन सहस्ररश्मिना सूर्य्येण साक्षात

१ अथ निम्न प्रस्थापिता प्रेरिता अश्वा येन स तेन।
२ उदीक्षिता ऊर्द्ध्व ईक्षिता।

आसक्तबाहुलतया[१] साङ्गमुद्धृतया[२] भुवा।
महावराहदंष्ट्राया विश्रान्ताः प्रलयापदि ॥ ८ ॥
सर्गशेषप्रणयनात् विश्वयोनेरनन्तरम्[३]।
पुरातनाः पुराविद्भिर्धातार इति कीर्त्तिताः ॥ ९ ॥
प्राक्तनानां[४] विशुद्धानां परिपाकमुपेयुषाम्[५]।

स्वयम् एव स्वप्रणाममु उदीचिता गमनाभ्यनुज्ञादानपर्य्यन्तम् इत्यर्थः, भगवतः सूर्य्यस्याप्युपास्याः इति भावः ॥ ७ ॥

आसक्तेति। पुनः किंविधाः? प्रलयापदि कल्पान्तसङ्कटे आसक्तबाहुलतया दंष्ट्रायाम् इति शेषः उद्धृतया दंष्ट्रया इति शेषः, भुवा सार्द्धं धरण्या सह महावराहदंष्ट्रायां विश्रान्ताः महाप्रलयेऽप्यविनाशिन इत्यर्थः ॥ ८ ॥

सर्गशेषेति। विश्वयोनेः ब्रह्मणः अनन्तरं सर्गशेषस्य प्रणयनात् ब्रह्मसृष्टावशिष्टसृष्टेः करणाद्धेतोः इत्यर्थः पुराविद्भिः पुराणवेदिभिः व्यासादिभिः पुरातनाः धातारः इति कीर्त्तिताः। विश्वयोनेरिति सम्बन्धमात्रे षष्ठी 'तस्यानन्तरम्' इति भाष्य दर्शनात्, अपादानत्वविवक्षायां तु पञ्चमी अयमदःशब्दो यथा 'शब्दावृत्तादनन्तरस्य' इति शाबरभाष्ये दर्शनात्। तथा 'अथातो धर्म्मजिज्ञासा वेदाध्ययनादनन्तरम्' इत्याचार्य्याः। कविश्च 'पुराणपत्रापगमादनन्तरम्' इति। एवमन्यत्रापि द्रष्टव्यम् ॥ ९ ॥

प्राक्तनानामिति। प्राक्तनानां जन्मान्तरभवानां विशुद्धानां

---

१ आसक्ते बाहू लते इव यस्याः सा तया।

२ उद्धृतया उत्तोल्य धृतया।

३ विश्वयोनेः विश्वस्य जगतः योनिः प्रभवः कारणम् इति यावत् तस्य।

४ प्राक् भवानि प्राक्तनानि तेषाम्। भवार्थे तनप्रत्ययः।

५ उपेयुषाम् उपपूर्वात् इधातोः क्वसुः ततः षष्ठ्या बहुवचनम्।

तपसामुपभुञ्जाना फलान्यपि तपस्विन ॥१०॥ (कुलकम्)
तेषा मध्यगता१ साध्वी पत्य. पादार्पितेक्षणा।
साक्षादिव तप सिद्धि बभासे बह्वरुन्धती ॥ ११ ॥
तामगौरवभेदेन२ मुनी श्चापश्यदीश्वर ।
स्त्रीपुमानित्यनास्थैषा वृत्त हि महित सताम् ॥ १२॥
तद्दर्शनादभूत् शम्भो भूयान्२ दारार्थमादर ।

निर्मलाना परिपाक फलदानोन्मुखत्वम् उदेयुषा गताना तपसा फलानि उपभुञ्जाना अपि तपस्विन तपोनिष्ठा प्रारब्धभोगिनो निस्पृहाश्च इति भाव ॥१०॥ (कुलकम्)

तेषामिति। तेषाम् ऋषीणां मध्यगता साध्वी पतिव्रता अत एव पत्य वशिष्ठस्य पादयो अर्पितेक्षणा निविष्टदृष्टि अरुन्धती साक्षात् प्रत्यक्षा तप सिद्धि इव तेषामेव इति शेष, तेषा मध्यगतेति लिङ्गवचनादिसाम्यादियमुपमा। बहु भूयिष्ठ बभासे भाति स्म ॥ ११ ॥

तामिति। ईश्वर भगवान ताम् अरुन्धतीं मुनीन् च अगौरवभेदेन समानप्रतिपत्त्या अपश्यत दृष्टवान। नचायम विवेक इत्याह, हि यस्मात् स्त्री पुमान च इत्येषा अनास्था स्त्रीपुंसभेद न विवक्षित किन्तु सतां साधूना वृत्त चरितम् एव महित पूज्यम्। 'गुणा पूजास्थान गुणिषु न च लिङ्ग न च वय' इति भाव ॥ १२ ॥

तदिति। तद्दर्शनात् अरुन्धतीदर्शनात शम्भो दारार्थ

१ मध्य गता इति द्वितीयातत्पुरुष समास ।

१ अगौरवभेदेन गौरवस्य भेद गौरवभेद न गौरवभेद अगौरवभेद तेन आदराविशेषेण ।

२ अतिशयेन बहु भूयान्। बहुशब्दात् ईयसु ।

क्रियाणां खलु धर्म्याणां सत्पत्नो मूलकारणम् ॥१३॥
धर्म्मेणापि पदं शर्व्वे कारिते पार्व्वतीं प्रति।
पूर्व्वापराधभीतस्य१ कामस्योच्छ्वसितं२ मन ॥ १४ ॥
अथ ते मुनय सर्व्वे मानयित्वा जगद्गुरुम्।
इदमूचुरनूचाना प्रीतिकण्टकितत्वच ॥ १५ ॥
यद् ब्रह्म सम्यगाम्नात यदग्नौ विधिना हुतम्।

दारपरिग्रहार्थम् आदर भूयान् बहुतर अभूत्। ननु दारा कुत्रोपयुज्यन्त इत्यताह, धर्म्याणा धर्म्मात् अनपेतानाम। 'धर्म्म पथ्यर्थन्यायादनपेते' इति यतप्रत्यय । क्रियाणाम इज्यादीनां सत्य पतिव्रता पत्नी सत्पत्नी । पत्युर्नो यज्ञसयोगे' इति ङीप् नकारश्च। मूलकारण खलु ॥ १३ ॥

धर्म्मेणेति। धर्म्मेण दारसङ्ग्रहलक्षणेन अपि कर्त्रा शर्व्वे ईश्वरे पार्व्वतीं प्रति पद कारिते सति। हृक्रोरन्यतरस्याम् इति शर्व्वस्याणिकर्त्तु कर्म्मत्वम। पूर्व्वापराधभीतस्य कामस्य मन उच्छ्वसित पुनरुज्जीवनावकाशो भवतीति सप्रत्याशमभूत् इत्यर्थ ॥ १४ ॥

अथेति। अथ अनूचाना साङ्गवेदप्रवक्तार । अनूचान प्रवचने साङ्गेऽधीती गरोस्तु य ' इत्यमर । 'उपेयिवाननाश्वाननूचानश्च इति निपात । प्रीत्या कण्टकिता पुलकिता त्वच येषा ते तथोक्ता ते सर्व्वे मुनय जगद्गुरु हर मानयित्वा पूजयित्वा इद वक्ष्यमाणम् ऊच ॥ १५ ॥

यदिति। ब्रह्म वेद । 'वेदस्तत्त्व तपो ब्रह्म' इत्यमर ।

---

१ पश्चात् अपराधात शिवसमाधिभङ्गरूपात इत्यर्थ भीत तस्य ।

२ उच्छ्वसितम उत्पन्नवीत श्वसधातो कर्त्तरि क्त ।

यच्च तप्तं तपस्तस्य विपक्कं फलमद्य नः ॥ १६ ॥
यदध्यक्षेण[१] जगतां वयमारोपितास्त्वया।
मनोरथस्याविषयं मनोविषयमात्मनः ॥ १७ ॥
यस्य चेतसि वर्त्तेथाः स तावत् कृतिनां[२] वरः।
किं पुनर्ब्रह्मयोनेर्यस्तव चेतसि वर्त्तते ॥ १८ ॥

सम्यक् नियमपूर्व्वकम् आम्नातम् अधीतम् इति यत्, अग्नौ विधिना हुतम् इति यत्, तपः चान्द्रायणादिकं तप्तम् इति च यत्, तस्य अध्ययनेज्यातपोरूपस्य आश्रमत्रयसाध्यस्य कृतस्यापि कर्म्मणः इत्यर्थः। समुदायाभिप्रायकमेकवचनम् अन्यथा आवृत्त्यान्वयप्रसङ्गात्। न च नपुंसकैकवद्भाव अनपुंसकेनेति नियमात्। फलं कार्य्यम् अद्य नः अस्माकं विपक्कं सुनिष्पन्नम् इत्यर्थः। कर्म्मणि क्तः 'पचो वः' इति निष्ठातस्य वत्वम् ॥ १६ ॥

तदेव फलमाह, यदिति। यत् यस्मात् कारणात् जगताम् अध्यक्षेण अधिपेन त्वया वयं मनोरथस्य अभिलाषस्य अविषयम् अगोचरम् आत्मनः स्वस्य मनोविषयं मनोऽभीष्टम् आरोपिताः प्रापिताः, तस्मात् विपक्कं फलमिति पूर्व्वेण सम्बन्धः। सकलजगदन्वेष्यस्य भगवतोऽपि वयमन्वेष्या भवाम इति परमोत्कृष्टा वयम् इति भावः ॥ १७ ॥

तदेवोपपादयति, यस्येति। यस्य जनस्य चेतसि वर्त्तेथाः येन स्मर्य्यसे इत्यर्थः स तावत् [illegible] कृतिनां कृतकृत्यानां वरः श्रेष्ठः। [illegible] [illegible] योनेः कारणस्य यद्वा [illegible]प्रमाणकस्य तव चेतसि यः वर्त्तते त्वया स्मर्य्यते इत्यर्थः, किं पुनः स कृतिनां वरः इति किं [illegible] इत्यर्थः ॥ १८ ॥

१ अध्यक्षेण साक्षात्कारविषयेण।

२ [illegible] विद्यानां यथा [illegible] [illegible] [illegible] [illegible]।

सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम्१।
अद्य तूच्चैस्तरं ताभ्यां स्मरणानुग्रहात् तव ॥ १९ ॥
त्वत्सम्भावितमात्मानं बहु मन्यामहे२ वयम्।
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ २० ॥
या नः प्रीतिर्विरूपाक्ष३ त्वदनुध्यानसम्भवा४।

सत्यमिति। अर्कात् सूर्य्यात् च सोमात् चन्द्रात् च परम् उच्च पदं स्थानम् अध्यास्महे तिष्ठाम वयम् इति शेषः, सत्यम्। अधिशीङ्स्थासां कर्म्म इति कर्म्मत्वम्। अद्य तु तव कर्त्तु स्मरणम् एव अनुग्रहः प्रसादः तस्मात् हेतोः ताभ्याम् अर्केन्दु-भ्याम् उच्चैस्तरम् अत्युच्च पदम् अध्यास्महे इति सम्बन्धः। उच्चै-स्तरमिति द्रव्यप्रकर्षत्वान्नामुप्रत्ययः ॥ १९ ॥

त्वदिति। वयं त्वया सम्भावितं सत्कृतं त्वत्सम्भावितम् आत्मानम् आत्मस्वरूपं बहु अधिकं यथा तथा मन्यामहे। तथाहि, उत्तमादरः सत्पुरुषकर्तृकः सत्कारः स्वगुणेषु विषये प्रायेण भूम्ना प्रत्ययं विश्वासम् आधत्ते जनयति। सर्व्वस्यापि महाजनपरिग्रह एव पूज्यताहेतुः इत्यर्थः ॥ २० ॥

येति। हे विरूपाक्ष! त्वदनुध्यानसम्भवा त्वत्कर्तृकस्मरण-जन्या नः अस्माकं या प्रीतिः सा प्रीतिः तुभ्यं किम् आवेद्यते?

---

१ पदमिति अधिपूर्व्वादासधातोरधिकरणस्य कर्मत्वम्।

२ जानीमः।

३ विरूपाक्ष! विरूपाणि विषमाणि अक्षीणि इति यावत् अक्षीणि यस्य सः तत्सम्बोधने।

४ तव त्वत्कर्त्तृकम् इत्यर्थः अनुध्यानं तस्मात् सम्भवः उत्पत्तिः यस्याः सा।

सा किमावेद्यते तुभ्यम् अन्तरात्मासि देहिनाम् ॥ २१ ॥
साक्षाद् दृष्टोऽसि न पुन विद्मस्त्वां वयमञ्जसा।
प्रसीद कथमात्मान न धिया पथि वर्त्तसे ॥ २२ ॥
कि येन सृजसि व्यक्तम् उत येन बिभर्षि तत्।
अथ विश्वस्य सहर्त्ता भाग कतम एष ते ॥ २३ ॥
अथवा सुमहत्येषा प्रार्थना देव तिष्ठतु।

किमथ निवेद्यते? तथाहि, देहिना प्राणिनाम् अन्तरात्मा अन्तर्यामी असि, सर्व्वसाक्षिणा त्वया अस्मत्प्रीतिरनावेदितापि ज्ञायते एव यत, ततो न बुद्धबोधन सम्भवति इति भाव ॥ २१॥

साक्षादिति। हे देव! साक्षात् प्रत्यक्षेण दृष्ट असि अञ्जसा पुन तत्त्वतस्तु त्वा वय न विद्म दृश्यमानस्य रूपस्यातात्त्विकत्वात् इति भाव। अत प्रसीद अनुगृहाण आत्मन निजस्वरूप कथय। न चाकथित तत सुबोधमित्याह, धिया बुद्धीना पथि न वर्त्तस अतस्त्वयैव त्वद्रूप कथनीयम् इत्यर्थ ॥ २२ ॥

तात्त्विक रूप तावदास्ता न दृश्यमानमपि रूप तत्त्वतो रूपयितु शक्यमित्याह, किमिति। हे देव! एष दृश्यमान ते भाग मूर्त्ति, किम्? येन भागेन व्यक्त प्रपञ्च सृजसि स। यत्तदोर्नित्यसम्बन्धात् सर्व्वत्र तच्छब्दोऽध्याहार्य्य। उत येन भागेन तत् व्यक्त बिभर्षि पालयसि स वा। अथ य भाग तस्य विश्वस्य सहर्त्ता स वा। किमाद्य सन्देहे। कतम? ब्रह्मविष्णुमहेश्वरेषु अय कतम भाग? तदुच्यताम् इत्यर्थ ॥ २३ ॥

ननु हर इत्येव विनिश्चयात् कथमय सशयस्तत्राह अथवेति। अथवा हे देव! सुमहती गुह्यतमत्वात अतिदुर्लभा इत्यर्थ, एषा प्रार्थना निजरूपनिरूपणप्रार्थना तिष्ठतु। किन्तु

चिन्तितोपस्थितास्तावत् शाधि[1] न करवाम किम् ॥२४॥
अथ मौलिगतस्येन्दो:[2] विशदैर्दशनांशुभि।
उपचिन्वन् प्रभा तन्वी प्रत्याह परमेश्वर ॥ २५ ॥
विदित वो यथा स्वार्था न मे काश्चित् प्रवृत्तय।
ननु मूर्त्तिभिरष्टाभि. इत्यम्भूतोऽस्मि सूचित ॥ २६ ॥
सोऽह तृष्णातुरैर्वृष्टिं विद्युत्वानिव[3] चातकै.।

चिन्तितेन चिन्तिता वा उपस्थिता चिन्तितोपस्थिता तान न अस्मान तावत् शाधि आज्ञापय कि करवाम? प्रार्थनाया लोट। अलमप्रस्तुतेन प्रस्तुते तावन्नियडत्त्व इत्यर्थ ॥ २४ ॥

अथेति। अथ परमेश्वर मौलिगतस्य इन्दो तन्वीम् अल्पा कलामात्रत्वात् इति भाव प्रभा कान्ति विशदै शुभ्रै दशनांशुभि उपचिन्वन वर्द्धयन प्रत्याह प्रत्युवाच इत्यर्थ ॥२५॥

विदितमिति। हे मुनय! काश्चित् अपि मे प्रवृत्तय व्यापारा स्वार्था न भवन्ति यथा तथा व युष्माक विदितम वाक्यार्थ कर्म, बह्वर्थत्वाद्वर्त्तमाने क्त, तद्योगात् षष्ठी। प्रवृत्तिपारार्थ्ये प्रमाणमाह, अष्टाभि मूर्त्तिभि इत्यम्भूत इम प्रकार परार्थप्रवृत्तिरूप प्राप्त। भू प्राप्ताविति धातो कर्त्तरि क्त। सूचित ज्ञापित अस्मि, मतस्वमूर्त्तिचेष्टया पारार्थ्यमनुमेयम इत्यर्थ ॥ २६ ॥

स इति। स परार्थप्रवृत्ति अहम् तृष्णातुरै चातकै वृष्टि विद्युत्वान मेघ इव, अरिविप्रकृतै शत्रुपीड़ितै देवै

१ शासधातो लोट मध्यमपुरुषैकवचनम।
२ मौलिगतस्य मौलि गत तस्य शिर स्थितस्य।
३ विद्युत विद्यते यस्य स विद्युत्वान्।

अरित्रिप्रक्तैर्देवै प्रसूतिं प्रतियाचित ॥ २७ ॥
अत आहर्त्तुमिच्छामि पार्व्वतीमात्मजन्मने।
उत्पत्तये हविर्भोक्तु यजमान इवारणिम् ॥ २८ ॥
तामस्मदर्थे युष्माभि याचितव्यो हिमालय ।
विक्रियायै न कल्पन्ते सम्बन्धा सदनुष्ठिता ॥ २९ ॥
उन्नतेन स्थितिमता धुरमुद्वहता भुव ।

प्रसूतिम पुत्रोत्पादनम् प्रतियाचित । याचतेर्दुहादित्वादप्र धाने कर्म्मणि क्त ॥ २७ ॥

अत इति। अत सुरप्रार्थितत्वाद्धेतो आत्मजन्मने पुत्राय पत्रमुत्पादयितुम् इत्यर्थ । क्रियार्थोपपदस्य' इत्यादिना चतुर्थी। पार्व्वतीम यजमान यष्टा 'पुयजो शानन' इति शाननप्रत्यय । हविर्भोक्तु अग्ने उत्पत्तये अरणिम अग्नि मन्थनदारुविशेषम इव। 'निर्म्मन्थदारुणि त्वरणिद्वयो इत्य मर । आहर्तुम सग्रहीतुम इच्छामि॥ २८ ॥

तामिति। अस्मदर्थे अस्मत्प्रयोजने निमित्ते सति युष्माभि ताम पार्व्वतीम हिमालय हिमवान याचितव्य । याचेर्दुहा दित्वादप्रधाने कर्म्मणि तव्यप्रत्यय। आवश्यकञ्चैतदित्याह, सद्भि सत्पुरुषै अनुष्ठिता सङ्घटिता सम्बन्धा यौनादय विक्रियायै वैकल्योत्पादनाय न कल्पन्ते न पर्य्याप्नुवन्ति, न समर्था इत्यर्थ । अलमर्थयोगाच्चतुर्थी॥ २९ ॥

न चाह लौल्यात स्त्रियमिच्छामि किन्तु देवोपकाराय यद्येव निखिलदेवेषु विद्यमानषु हिमगिरे शिलान्तस्य कन्या परिणयेच्छा कथमित्युक्ते स एव मे श्लाघ्यसम्बन्धोऽत्रभवान हिमवानित्याह, उन्नतेनेति। उन्नतेन प्रांशुना प्रसिद्धेन च स्थितिमता प्रतिष्ठावता भुव धरम भारम् उद्वहता निर्वाह

तेन योजितसम्बन्धं वित्त मामप्यवञ्चितम् ॥ ३० ॥
एव वाच्य स कन्यार्थम इति वो नोपदिश्यते।
भवत्प्रणीतमाचारम् आमनन्ति१ हि साधव ॥ ३१ ॥
आर्य्याप्यरुन्धती तत्र व्यापारं कर्तुमर्हति।
प्रायेणैवविधे कार्य्ये पुरन्ध्रीणा प्रगल्भता ॥ ३२ ॥
तत् प्रयातौषधिप्रस्थ सिद्धये हिमवत्पुरम्।

केगा इत्यर्थ तेन हिमवता योजित सङ्घटित सम्ब य यौनसम्बन्ध यस्य तम् माम अपि अवञ्चितम अव्यामोहितम वित्त जानीत। विद् ज्ञाने इति धातोर्लोट ॥ ३० ॥

तर्हि स कि वाच्य इत्याशङ्क्याह एवमिति। कन्यार्थ कन्याप्रदानाय स हिमवान् एव वाच्य इति व युष्माभिः न उपदिश्यते। कुत ? हि यस्मात साधव विद्वास भवद्भि प्रणीत स्मृतिरूपेण निबद्धम आचारम् आमनन्ति उपदिशन्ति। न हि स्वयमुपदेष्टार परोपदेशमपेक्षन्ते इत्यर्थ ॥ ३१ ॥

आर्य्येति। आर्य्या पूज्या अरुन्धती अपि तत्र विवाहकृत्ये व्यापार साहय्य कर्त्तुम् अर्हति। तथाहि, प्रायेण प्राचुर्य्येण एवविधे कार्य्ये विवाहादिकार्य्ये दुर्घटे इत्यर्थ, पुरन्ध्रीणा कुटुम्बिनीनाम। 'स्यात् तु कुटुम्बिनी पुरन्ध्रि' इत्यमर। प्रगल्भता चातुर्य्यम्। स्त्रीप्रधानेषु कृत्येषु स्त्रीणामेव घटनापाटवम् इति भाव ॥ ३२ ॥

तदिति। तत् तस्मात् कारणात् ओषधिप्रस्थ नाम हिमवतपर हिमवन्नगर सिद्धये कार्य्यसिद्ध्यर्थ प्रयात गच्छत। अस्मिन पुरोवर्त्तिनि महाकोशी नाम तत्रत्या काचित् नदी तस्या प्रपाते भृगौ एव सा नदी यत्र पतति तस्मिन इत्यर्थ।

१ आमनन्ति। आङ्पूर्वात् म्नाधातो कर्त्तरि लट्।

महाकोशीप्रपातेऽस्मिन् सङ्गम पुनरेव न ॥ ३३ ॥
तस्मिन् संयमिनामाद्ये[१] जाते परिणयोन्मुखे।
जहु परिग्रहव्रीडा प्राजापत्यास्तपस्विन ॥ ३४ ॥
तत. परममित्युक्त्वा प्रतस्थे मुनिमण्डलम्।
भगवानपि सम्प्राप्त प्रथमोद्दिष्टमास्पदम् ॥ ३५ ॥
ते चाकाशमसिश्यामम् उत्पत्य परमर्षय ।
आसेदुरोषधिप्रस्थ मनसा समरंहस[२] ॥ ३६ ॥

'प्रपातस्त्वतटो भृगु' इत्यमर । न अस्माक पन सङ्गम अस्तु इति शेष, भवत्समागम प्रतिपालयन्नहमिहैव निवत्स्यामि इत्यथ ॥ ३३ ॥

तस्मिन्निति। संयमिना योगिनाम् आद्ये तस्मिन ईश्वरे परिणयोन्मुखे विवाहोत्सुके जाते सति प्रजापते इमे प्राजापत्या ब्रह्मपत्रा इत्यर्थ, तपस्विन मुनय परिग्रहे पत्नीभि व्रीड़ा गार्हस्थ्यनिमित्ताम इत्यर्थ । 'पत्नीपरिजनादानमूल शापा परिग्रहा' इत्यमर । जहु तत्यजु । जहातेलिटि रूपम्। न हि समानगुणदोषेषु व्रीड़ागमोऽस्ति इति भाव ॥३४

तत इति। तत अनन्तर मुनिमण्डल मुनिसमूह परमम् इति उक्त्वा ओम् इति उक्त्वा अनुमन्य इत्यर्थ । 'अव्यय मेतत् 'ओमेव परम मतम्' इत्यमर । प्रतस्थे भगवान ईश्वर अपि प्रथमोद्दिष्ट पूर्व्वसङ्केतितम् आस्पद स्थान महाकोशी प्रपात सम्प्राप्त ॥ ३५ ॥

त इति। मनसा समरंहस मनस्तुल्यवेगा ते परमर्षयश्च पूर्व्वश्लोकोक्तेश्वरसमच्चयार्थश्चकार । असिवत् श्याम नीलम्

१ संयमिना संयम मनस समाधि स विद्यते येषा ते तेषाम।

२ सम रंह येषा ते।

अलकामतिवाह्येव वसतिं वसुसम्पदाम् ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम् ॥ ३७ ॥
गङ्गास्रोतःपरिक्षिप्तवप्रान्तर्ज्वलितौषधि ।
बृहन्मणिशिलासालं गुप्तावपि मनोहरम् ॥ ३८ ॥
जितसिंहभया नागा यत्राश्वा बिलयोनयः ।

आकाश ख प्रति उत्पत्य ओषधिप्रस्थ हिमवत्पुर आसदुः सद्य प्रापु इत्यर्थ ॥ ३६ ॥

इत पर दशभि श्लोकै ओषधिप्रस्थमेव वर्णयति, अलकामिति। वसुसम्पदा धनसमृद्धीना वसति स्थानम् अलका कुबेरनगरीम् अतिवाह्य परिक्षिप्य इति यावत् उपनिवशितम् इव स्थित तथा स्वर्गस्य अभिष्यन्द अतिरेक अतिरिक्तजन इति यावत् तस्य वमन नि सारण कृत्वा उपनिवेशितम् इव स्थितम। उभयत्रापि कौटिल्य, 'भूतपूर्वमभूतपूर्वं वा जनपद परदेशापवाहेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत इति। अलकामरावत्यतिशयितसमृद्धिकम् इत्यर्थ ॥ ३७ ॥

गङ्गेति। गङ्गाया स्रोतोभि प्रवाहै परिक्षिप्त परिवेष्टित तैरेव सपरिखम् इत्यर्थ, वप्र चय प्राकारचैत्यम् इति यावत। 'स्याच्चयो वप्रमस्त्रियाम्' इत्यमर । तस्य अन्त मध्ये ज्वलिता प्रकाशमाना ओषधय यस्य तत तथोक्त ज्वलितौषधित्वात रात्रिषु सञ्चारिणा दीपनिरपेक्षम् इत्यर्थ, बृहन विपुल मणिशिलाना माणिक्याना साल प्राकार यस्य तत् तथोक्तम्। 'प्राकारो वरण साल ' इत्यमर । अत एव गुप्तौ अपि सवरणे अपि मनोहरम् अकृत्रिमदुर्गसवरणम् इति भाव ॥ ३८ ॥

जितेति। यत्र पुरे नागा गजा जित सिंहेभ्य भय यै

यक्षा किंपुरुषाः पौरा योषितो वनदेवताः ॥ ३९ ॥
शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम्।
अनुगर्ज्जितसन्दिग्धाः[१] करणैर्मुरजस्वनाः ॥ ४० ॥
यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः ।

न तथोक्ता सिंहाधिकबला इत्यर्थः। नाथस्तु 'पदं तुषारस्रुति धौतरक्तम्' इत्येतद्विरोधभयात् वीतवीतभया इति पपाठ। तथा न भेतव्यं तत्र वनगजानां सिंहहतत्वाभिधानात् अत्र तु ओषधिप्रस्थगजानां हिमवन्महिम्ना सिंहातिरेकसम्भवेनाविरोधादिति। वीतवीतेति पाठे वीतं विगतं वीतात् पादाङ्कुशकर्म्मभ्यो भयं येषां ते तथोक्ताः स्वभावविनीता इत्यर्थः। 'पादकर्म्म यतं प्रोक्तं यानमङ्कुशवारणम्। उभयं वीतमाख्यातम्' इति यादवः। अश्वा विलयोनयः विलसम्भवाः अन्यत्र तु न तथेति वैचित्र्यम्। उक्तं च, 'अमृताद्वाष्पतो वह्नेर्वेदेभ्योऽण्डाच्च गर्भतः। साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्त्तिता ॥' इति। यक्षाः प्रसिद्धाः किम्पुरुषाः किन्नराश्च पौराः पुरजनाः वनदेवता एव योषितः न तु मानुष्य इत्यर्थः ॥ ३९ ॥

शिखरेति। यत्र पुरे शिखरेषु आसक्ता मेघा येषां तेषां वेश्मनां सम्बन्धिनः अनुगर्ज्जितानि प्रतिगर्ज्जितानि तैः सन्दिग्धाः मुरजस्वनाः करणैः तालव्यवस्थापकैः ताड़नविशेषैः। तदुक्तं राजकन्दर्पेण नृत्यवादित्रगीतानां प्रयोगवशभेदिनाम्। सस्थानं ताडनं रोधं करणानि प्रचक्षते ॥ इति। व्यज्यन्ते स्फुटीक्रियन्ते ॥ ४० ॥

यत्रेति। यत्र नगरे विलोलानि चञ्चलानि विटपेषु

---

१ अनुगर्ज्जितैः सन्दिग्धा जनितसन्देहा उभयोः सादृश्यातिशयात् इति भावः ॥

शृहयन्त्रपताकाश्री. अपौरादरनिर्म्मिता ॥ ४१ ॥
यत्र स्फटिकहर्म्म्येषु नक्तमापानभूमिषु।
ज्योतिषा प्रतिविम्बानि प्राप्नुवन्त्युपहारताम् ॥ ४२ ॥
यत्रौषधिप्रकाशेन नक्तं दर्शितसञ्चरा।
अनभिज्ञास्तमिस्राणां१ दुर्दिनेष्वभिसारिकाः ॥ ४३ ॥
यौवनान्त२ वयो यस्मिन् नान्तकः कुसुमायुधात्।

अशुकानि येषां ते कल्पद्रुमैः एव अपौरादरेण पौरादरं विना एव निर्मिता अयत्नसिद्धा इत्यर्थः गृहेषु यानि यन्त्राणि आधारदारूणि तेषु पताकाः तासां श्रीः सम्भवति इति शेषः। तत्र लम्बाम्बराः कल्पद्रुमा एव वैजयन्तीति सम्भाव्यन्ते इत्यर्थः ॥ ४१ ॥

यत्रेति। यत्र पुरे नक्तं रात्रौ स्फटिकहर्म्म्येषु आपानभूमिषु पानगोष्ठीप्रदेशेषु ज्योतिषां नक्षत्राणां प्रतिविम्बानि उपहारतां पुष्पोपहारत्वं मौक्तिकोपहारत्वं वा प्राप्नुवन्ति ॥ ४२ ॥

यत्रेति। यत्र पुरे दुर्दिनेषु मेघाच्छन्नदिवसेषु नक्तम् ओषधीनां तृणज्योतिषां प्रकाशेन सञ्चरन्ते एभिः इति सञ्चराः पन्थानः। 'गोचरसञ्चर' इत्यादिना घप्रत्ययान्तो निपातः। दर्शितसञ्चराः प्रकाशितमार्गाः अभिसारिकाः कान्तार्थिन्यः। 'कान्तार्थिनी तु या याति सङ्केतं साभिसारिका' इत्यमरः। तमिस्राणां तमसाम्। कृद्योगात् कर्म्मणि षष्ठी। अनभिज्ञाः तमांसि नाभिजानन्ति इत्यर्थः ॥ ४३ ॥

यौवनेति। यस्मिन् पुरे वयः यौवनान्तं यौवनावधिकं

१ न अभिजानन्ति या ता अनभिज्ञाः। जानातेः कर्त्तरि कः। तमिस्राणामिति कृद्योगे कर्म्मणि षष्ठी।

२ यौवनम् अन्तः अवधिः यस्य तत्।

रतिखेदसमुत्पन्ना निद्रा सञ्ज्ञाविपर्य्यय ॥ ४४ ॥
भ्रूभेदिभि १ सकम्पौष्ठै ललिताङ्गुलितर्जनै ।
यत्र कोपै कृता. स्त्रीणाम् आप्रसादार्थिन. प्रिया. ॥४५॥
सन्तानकतरुच्छाया-सुप्तविद्याधराध्वगम् २ ।
यस्य चोपवन वाह्य गन्धवद्गन्धमादनम् ॥४६॥ (कुलकम)

सर्व्वेऽप्यजरा इत्यर्थ तथा कुसुमायधात कामात अन्य इति शेष अन्तक मृत्य न अस्ति इति शेष विरहिणा तादृग दु खोत्पादकत्वादन्तकत्व पचार । काम विना मृत्युर्नास्ति इत्यथ, अत एव ततकार्य्यभूतमरणाभाव इत्याशयेनाह रतीति। रतिखेदसमुत्पन्ना निद्रा सुप्ति एव सञ्ज्ञाविपर्य्यय चेतनापगम न तु दीर्घनिद्रारूप इत्यर्थ । अतत्या सर्व्वे अजरामरा इति श्लोकतात्पर्य्यार्थ । अन्तयति अन्त करोति अन्तक ।अन्तयतेस्तत्करोतीति ण्यन्तात ण्वुल्प्रत्यय ॥ ४४ ॥

भ्रूभेदिभिरिति। यत्र पुरे प्रिया युवान भ्रूभेदिभि भ्रभङ्गवद्भि सकम्पा ओष्ठा येषु ते ललितानि अङ्गुलितर्ज्जनानि येषु ते स्त्रीणा क पै मानाख्यै आप्रसादार्थिन आप्रसाद प्रसादपर्य्यन्तम अर्थिन याचका कृता न तु शत्रुकोपे इति भाव ॥ ४५ ॥

सन्तानकेति। कि ५ इति चार्थ । सन्तानकतरो छायासु सुप्ता विद्याधरा देवताविशेषा ते एव अध्वगा यस्मिन तत तथोक्त गन्धवत गन्धाढ्य गन्धमादन नाम गिरि यस्य पुरस्य वहिर्भव वाह्यम उपवनम आराम । अत्र 'गन्धवद्गन्धमादनम इति आगन्तुक पाठ । प्राचीनपाठस्तु 'सुगन्धिर्गन्धमादन

१ भ्रुवा भेद भङ्ग विद्यते येषु ते तै ।

२ अध्वगा अध्वानि गच्छन्ति ये ते अध्वगा । गच्छते ड ।

अथ ते मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम् ।
स्वर्गाभिसन्धिसुकृतं वञ्चनामिव मेनिरे ॥ ४७ ॥
ते सद्मनि गिरेर्वेगात् उन्मुखद्वाःस्थवीक्षिताः १ ।
अवतेरुर्जटाभारैः लिखितानलनिश्चलैः २ ॥ ४८ ॥

इति पुलिङ्गान्त । अत एव क्षीरस्वामिना गन्धमादनमन्ये चेत्यत्र गन्धेन मादयतीति गन्धमादन इति व्याख्याय प्रयोगे च पुलिङ्गता दृश्यते इत्याशयेनोक्तम्, 'सुगन्धिगन्धमादन' इति कालिदास न्ति। सन्तानकतरुच्छायेत्यत्र पूर्व्वपदार्थबाहुल्यसम्भवेऽपि शलभ च्छायम् इच्छच्छायमितिवत् समर्थच्छायानिष्पत्तेस्तदपेक्षाभावात 'छायाबाहुल्ये' इति नपुंसकत्वं नास्तीत्यनुसन्धेयम् ॥ ४६ ॥

अथेति । अथ ते दिवि भवा दिव्या मुनयः हिमवत इदं हैमवतं पुरं प्रेक्ष्य स्वर्गाभिसन्धिना स्वर्गोद्देशेन यत् सुकृतं ज्योतिष्टोमादि अनुष्ठानं तत् स्वर्गाभिसन्धिसुकृतं वञ्चना प्रतारणाम् इव मेनिरे। हिमवन्नगरमवेक्ष्य स्वर्गस्य पुण्यफलत्व वक्ता वेदेन वयं विप्रलब्धा इत्यर्थः स्वर्गादतिरमणीयम् इति भावः ॥ ४७ ॥

त इति । लिखितानलनिश्चलैः चित्रगतज्वलननिष्पन्दैः इति वेगप्रकर्षोक्तिः । जटाभारैः उपलक्षिताः ते मुनयः द्वारि तिष्ठन्ति इति द्वाःस्थाः द्वारपालकाः । 'प्रतीहारो द्वारपाल द्वाःस्थ द्वाःस्थित दर्शकाः' इत्यमरः । उन्मुखैः ऊर्द्ध्वमुखैः द्वाःस्थै वीक्षिताः सन्तः न तु विनिवारिताः इत्यर्थः, गिरेः हिमवतः सद्मनि वेगात् अवतेरुः अवतीर्णवन्तः ॥ ४८ ॥

१ द्वाःस्थाः द्वारि तिष्ठन्ति ये ते द्वाःस्थाः । तिष्ठते कर्त्तरि ड ।
२ लिखिता अनला इव निश्चला तैः ।

गगनादवतीर्णा सा यथावृद्धपुरःसरा।
तोयान्तर्भास्करालीव रेजे मुनिपरम्परा॥ ४९॥
तानर्घ्यानर्घ्यमादाय दूरात् प्रत्युद्ययौ गिरिः।
नमयन् सारगुरुभिः पादन्यासैर्वसुन्धराम्॥ ५०॥
धातुताम्राधरः प्रांशुः देवदारुवृहद्भुजः।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति॥ ५१॥

गगनादिति। गगनात् अवतीर्णा अवरूढा यथावृद्ध वृद्धानुक्रमेण स्थिता पुरःसरा अग्रेसरा यस्याः सा तथोक्ता। अनुपसर्ज्जनाधिकारान्न ङीप्। सा मुनिपरम्परा मुनिपङ्क्तिः, तोयान्तः तोयाभ्यन्तरे भास्करालो प्रतिविम्बितार्कपङ्क्तिः इव, रेजे। एतेन मनीनां तेजस्वित्वेऽपि सुखसन्दर्शनं सूचयति। भास्कराणां भूयिष्ठत्वसम्भावनार्थं तोयान्तरित्युक्तम्। अत एव बहुत्वमिष्टस्य॥ ४९॥

तानिति। गिरिः हिमवान् अर्घ्यम् अर्घार्थं जलम् आदाय सारगुरुभिः अन्तःसारदुर्भरैः पादन्यासैः वसुन्धरां नमयन् अधः प्रापयन् अर्घम् अर्हन्ति इति अर्घ्यान् पूज्यान्। दण्डादित्वाद् यप्रत्ययः। तान् मुनीन् दूरात् प्रत्युद्ययौ॥५०॥

सम्प्रति हिमवन्तमेव जङ्गमस्थावररूपद्वयसाधारणैर्विशेषणैर्विशिनष्टि, धात्विति। धातुवत् ताम्रः अधरः यस्य स तथोक्तः, अन्यत्र धातुः एव ताम्रः अधरः यस्य, प्रांशुः उन्नतः, उभयत्रापि समानम्। देववारुवत् वृहन्तौ भुजौ यस्य स तथोक्तः, देवदारव एव वृहन्तौ भुजौ यस्य इति अन्यत्र प्रकृत्या स्वभावेन एव शिलावत् उरः यस्य स शिलोरस्कः शिला एव इति अन्यत्र। ‘उरःप्रभृतिभ्यः कप्’ इति कप्। अतः हिमवान् इति सुव्यक्तः। वर्त्तमाने क्तः। सन्ध्य स एवायं हिमवानिति तद्धर्म्मप्रत्यभिज्ञानादवधारित इत्यर्थः॥ ५१॥

विधिप्रयुक्तसत्कारै'१ स्वय मार्गस्य दर्शक ।
स तैराक्रमयामास शुद्धान्त शुद्धकर्म्मभि २ ॥ ५२ ॥
तत्र वेत्रासनासीनान्३ कृतासनपरिग्रह ।
इत्युवाचेश्वरान् वाच प्राञ्जलिर्भूधरेश्वर.४ ॥ ५३ ॥
अपमेघोदय५ वर्षम अदृष्टकुसुमं फलम् ।

विधीति। स हिमवान् विधिना शास्त्रेण प्रयुक्तसत्कारे कृतार्च्चने शुद्धकर्म्मभि अदुष्टचरिते शुद्धान्तप्रवेशार्हैं इत्यथ त मनिभि स्वय मार्गस्य दर्शयति इति दर्शक दर्शयिता सन। पश्यतेर्ण्यन्तात् ण्वुल्प्रत्यय। शुद्धान्तम अन्त पुरम आक्रमयामास प्रवेशयामास इत्यर्थ । अत्र क्रमेरगत्यर्थत्वात् 'गति-बुद्धि इत्यादिना तैरित्यस्य न कर्म्मत्वम् ॥ ५२ ॥

तत्रेति। तत्र शुद्धान्ते वेत्रासनासीनान् वेत्र लताविशेष वेत्रमयविष्टरोपविष्टान् ईश्वरान् प्रभून् भूधरेश्वर हिमवान् कृतासनपरिग्रह उपविष्ट सन् इत्यर्थ प्राञ्जलि कृताञ्जलि सन् इति एव वाचम् उवाच ॥ ५३ ॥

अपेति। अतर्कितोपपन्नम् अविचारितम् एव उपगतम् अत्यन्तासम्भावितम् इत्यर्थ, व युष्माक दर्शनम अपमेघोदय वर्षम अनभ्रा वृष्टि तथा अदृष्ट कुसुम यस्य तत् तथोक्त फल च तत मे प्रतिभाति अतिदुर्लभलाभ सवृत्त इत्यर्थ । अत्र मेघोदयकुसुमरूपकारणयोरभावेऽपि वर्षफलरूपकार्य्ययोरुद

---

१ विधिना प्रयुक्त सत्कार येषा ते तै ।
२ शुद्ध निर्म्मल कर्म्म येषा ते तै ।
३ वेत्रासनेष आसीना । आसधातो कर्त्तरि शानच ।
४ प्राञ्जलि प्रबद्ध अञ्जलि येन स । मध्यपदलोपी समास ।
५ अपगत मेघस्य उदय यस्मिन तत ।

अतर्कितोपपन्नं व दर्शनं प्रतिभाति मे ॥ ५४ ॥
मूढं बुद्धमिवात्मानं हैमीभूतमिवायसम् ।
भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात् ॥ ५५ ॥
अद्य प्रभृति भूतानाम्[१] अधिगम्योऽस्मि शुद्धये ।
यदध्यासितमर्हद्भिः तद्धि तीर्थं प्रचक्षते[२] ॥ ५६ ॥
अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः ।

याभिधानात् विभावना, मुनिदर्शनस्य विशिष्टहृत्तित्वेन च रूपणात् रूपकालङ्कारश्च इत्युभयो संसृष्टि ॥ ५४ ॥

मूढमिति । भवदनुग्रहात् आत्मानं मां मूढं बुद्धिविनाकृत बद्धम् इव मूढो भूत्वा यः बुद्धवान् तम् इव । कर्त्तरि क्त । आयसम् अयोविकार हैमीभूतम् आयसत्व विहाय सौवर्णत्व प्राप्तमिव इत्यर्थ । भूमे भूलोकात् दिवं स्वर्गम् आरूढम् इव मन्ये ज्ञानरूपस्थानानि अद्य मे परमुत्कृष्यन्ते इति भाव ॥५५॥

अद्येति । अद्य प्रभृति इत आरभ्य भूतानां प्राणिनां शुद्धये अभिगम्य अस्मि शुद्ध्यर्थिनां तीर्थभूतोऽस्मि इत्यर्थ । भवदागमनात् इति शेष । हि यस्मात् यत् अर्हद्भि सद्भि अध्यासितम् अधिष्ठित जुष्टम् इति यावत् तत् तीर्थं प्रचक्षते । निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ इत्यमर ॥ ५६ ॥

अवैमीति । हे द्विजोत्तमा । आत्मानं मां द्वयेन एव पूतं शुद्धम् अवैमि अवगच्छामि । केन द्वयेन ? मूर्ध्नि गङ्गाप्रपातेन मन्दाकिनीपातेन, च युष्माकं धौतयो क्षालितयो पादयो अम्भसा च । अत्र गङ्गाजलवत् पादाम्भस पावनत्वमित्यौपम्य

---

१ भूतानामिति कृद्योगे कर्त्तरि षष्ठी ।

२ कथयन्ति ।

मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा१ च व ॥ ५७ ॥
जङ्गमं प्रैष्यभावे व स्थावर चरणाङ्कितम्।
विभक्तानुग्रहं२ मन्ये द्विरूपमपि मे वपु ॥ ५८ ॥
॰यत्सम्भावनोत्थाय३ परितोषाय मूर्च्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥ ५९ ॥
न केवल दरीसस्थ४ भास्वता दर्शनेन व ।

गम्यते तच्च प्रस्तुताप्रस्तुतयोरिति दीपकालङ्कार । 'प्रिय प्रिय तराख्यानम् इति लक्षणात् प्रियोऽलङ्कार इति केचित ॥५८॥

जङ्गममिति। हे मुनय । द्विरूप जङ्गमस्थावरात्मकत्वात् द्विप्रकारकम अपि मे वपु विभक्तानग्रह विभज्य कृतप्रसाद मन्ये। कुत ? जङ्गम वप व युष्माक प्रैष्यभावे कैङ्कर्य्ये स्थितम इति शेष । प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या' इति वृद्धि । 'नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारका ' इत्यमर । स्थावर वप चरणाङ्कितम् अयमेव हि रुद्धाननग्रहो दासजनस्य यत् कर्म्मसु नियोजन मूर्द्धनि पादन्यासश्च इति तात्पर्य्यार्थ ॥ ५८ ॥

भवदिति। व्याप्ता दिगन्ता ये तानि व्याप्तदिगन्तानि महान्त्यपि इत्यर्थ मे मम अङ्गानि भवत्सम्भावनोत्थाय युष्म दनुग्रहजन्याय मूर्च्छते व्याप्नुवते परितोषाय न प्रभवन्ति न पर्य्याप्नुवन्ति। अलमर्थयोगाच्चतुर्थी । यथा महत्स्वपि मह्ला त्वेषु न माति तथा मे हर्षो वर्द्धते इत्यर्थ ॥ ५९ ॥

नेति भास्वता तेजस्विना विवस्वता च युष्माक दर्शनेन

१ धौत धावधातो सकर्म्मकात प्रक्षालनार्थात् कर्म्मणि क्त ।

२ विभक्त अनुग्रह यस्य तत ।

३ भवता सम्भावन तेन उत्तिष्ठति य स तस्मै ।

४ दरीष सन्तिष्ठते यत तत'। स्थाधातो कर्त्तरि ड ।

अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ॥ ६० ॥
कर्त्तव्यं वो न पश्यामि स्याच्चेत् किं नोपपद्यते ।
मन्ये मत्पावनायैव प्रस्थानं भवतामिह ॥ ६१ ॥
तथापि तावत् कस्मिंश्चित् आज्ञां मे दातुमर्हथ ।
विनियोगप्रसादा हि किङ्कराः प्रभविष्णुषु[१] ॥ ६२ ॥

केवलं दरीसंस्थं गुहागतं तमः ध्वान्तरूपम् एव न अपास्तं किन्तु मे अन्तर्गतम् अन्तरात्मगतं रजसः रजोगुणात् परम् अनन्तरं तमः अज्ञानरूपम् अपि अपास्तम्, रजस्तु पादन्यासैरेवापास्तम् इति भावः । प्रसिद्धैः भास्वद्भिः वाह्यं तमः अपास्यते एभिस्त्वन्तरमपि इति व्यतिरेको व्यज्यते ॥ ६० ॥

कर्त्तव्यमिति। कर्त्तव्यं कार्य्यं वः युष्माकं न पश्यामि निस्पृहत्वात् इति भावः । अथ स्यात चेत विद्येत यदि किं न उपपद्यते ? किं नाम न सम्भवति सर्व्वं सुलभमेव इत्यर्थः अथ वा किमत्र प्रयोजनचिन्तयेत्याह मत्पावनाय मच्छोधनाय एव भवताम् इह विषये प्रस्थानम् इमं देशम् उद्दिश्य इदं प्रयाणम् इत्यर्थः मन्ये तर्कयामि ॥ ६१ ॥

तथापीति। तथापि भवता निस्पृहत्वेऽपि कस्मिंश्चित् कर्म्मणि इति शेषः आज्ञाम् इदं कुरु इति आदेशं तावत् इदानीं मे मह्यं दातुम् अर्हथ मदनुग्रहबुद्ध्या इति भावः । हि यस्मात् किङ्कराः भृत्याः प्रभवन्ति इति प्रभविष्णुषु प्रभुषु विषये 'भुवश्च' इति इष्णुच्प्रत्ययः विशेषणं नियोगः विनियोगः प्रेषणम् एव प्रसादः अनुग्रहः येषां ते तथोक्ताः अन्यथा स्वस्वामिभावो निष्फलः इति भावः ॥ ६२ ॥

---

१ प्रभवन्ति ये ते प्रभविष्णव तेषु । प्रपूर्वात् भूधातोः कर्त्तरि इष्णु

एते वयममी दारा १ कन्येय कुलजीवितम्।
ब्रूत येनात्र व कार्य्यम् अनास्था वाह्यवस्तुषु ॥ ६३ ॥
इत्यूचिवांस्तमेवार्थं २ गुहामुखविसर्पिणा।
द्विरिव३ प्रतिशब्देन व्याजहार हिमालय. ॥ ६४ ॥
अथाङ्गिरसमग्रण्यम् उदाहरणवस्तुषु।

एत इति। किं बहुना एते वयम, अमी दारा इय कुलस्य जीवित प्राणभूता परमप्रेमास्पदम इत्यर्थं कन्या, अत्र एषा मध्य येन जनेन व कार्य्यं प्रयोजन ब्रूत तम् इति शेष येन सोऽपि दीयते इति भाव। रत्नहिरण्यादिक तु न मे गण्य मित्याह, वाह्यवस्तुषु कनकरत्नादिषु अनास्था अनादर। प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते। अदेय न किञ्चिदस्ति इति भाव ॥ ६३ ॥

इतीति। इति ऊचिवान उक्तवान। वचे क्वसुप्रत्यय। हिमालय हिमवान गहाना मुखेषु विवरेषु विसर्पति इति तथोक्तेन प्रतिशब्देन तम एव पूर्व्वोक्तम एव अर्थं द्वि द्विवारम। 'द्वित्रिचतुर्भ्य सुच्' इति सुच्प्रत्यय। व्याजहार बभाषे ॥ ६४ ॥

अथेति। अथ अनन्तरम ऋषय उदाहरणानि कथा प्रसङ्गा ते एव वस्तूनि अर्था तेषु अग्र नयति इति अग्रणी तम अग्रण्य प्रगल्भम् 'सत्सूद्विष' इत्यादिना क्विप्, 'अग्र ग्रामाभ्या नयतेरिति वक्तव्यम्' इति णत्वम। अङ्गिरस नाम

१ दार शब्द स्त्रीवाचकोऽपि नित्यपुंलिङ्ग नित्यवहुवचनान्तस्य आभिधानिक।

२ ऊचिवान। वच धातो कर्त्तरि अतीते क्वसु।

३ द्वौ वारौ इति द्वि।

ऋषयो नोदयामासुः प्रत्युवाच स भूधरम्॥ ६५ ॥
उपपन्नमिदं सर्व्वम् अतः परमपि त्वयि।
मनसः शिखराणाञ्च सदृशी[1] ते समुन्नतिः ॥ ६६ ॥
स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथा[2] हि ते।
चराचराणां भूतानां कुक्षिराधारतां गतः ॥ ६७ ॥

ऋषि नोदयामासुः प्रतिवक्तुं प्रेरयामासुः। स अङ्गिरा भूधरं हिमवन्तं प्रत्युवाच ॥ ६५ ॥

उपपन्नमिति। इदम् 'एते वयममी दाराः' इत्याद्युक्तं सर्व्वम् अतः परम् अतः अधिकम् अपि त्वयि उपपन्नं युज्यते तथाहि, ते मनसः शिखराणां च समुन्नतिः सदृशी शिखराणीव मनः महोन्नतम् इत्यर्थः। किं नाम दुष्करमुन्नतचित्तानाम्? इति भावः। प्रस्तुताप्रस्तुतयोर्मनःशिखरयोरौपम्यस्य गम्यत्वाद् दीपकालङ्कारः ॥ ६६ ॥

स्थान इति। त्वां स्थावरात्मानं स्थावररूपिणं विष्णुम् आहुः 'स्थावराणां हिमालयः' इति गीतावचनात्। स्थाने युक्तम्। युक्तार्थे अव्ययमेतत्। "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। तथाहि, ते तव कुक्षिः चराचराणां जङ्गमस्थावररूपिणां भूतानां पृथिव्यादीनाम् आधारतां गतः, तवैव विष्णोः कुक्षिरिवभूत इति भावः ॥ ६७ ॥

१ समाना इव दृश्यते या सा सदृशी। समानशब्दपूर्व्वात् दृशधातो समानशब्दस्य स आदेशः, स्त्रीत्वादीप्।

२ वेष्टि व्याप्नोति यः स विष्णुः। विष्धातो ह्वादिगणीयात् नुक्।

गामधास्यत् कथं नागः मृणालमृदुभिः[1] फणैः ।
आ रसातलमूलात्[2] त्वम् अवालम्बिष्यथा न चेत् ॥ ६८ ॥
अच्छिन्नामलसन्ताना समुद्रोर्म्यनिवारिताः ।
पुनन्ति लोकान् पुण्यत्वात् कीर्त्तयः सरितश्च ते ॥६९॥
यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः ।

गामिति । नागः शेषाहिः मृणालमृदुभिः विसकोमलैः फणैः गां भुवं कथम् अधास्यत् धारयेत् त्वम् आ रसातलमूलात् पातालपर्य्यन्तम् । विकल्पादसमासः । न अवालम्बिष्यथाः चेत् पादैर्नावालम्बेथा यदि त्वदवलम्बनादेव भुजगराजोऽपि भुवं बिभर्त्ति इत्यर्थः । अत्र क्रियातिपत्त्यभावात् लृङप्रयोगश्चिन्त्यः ॥ ६८ ॥

अच्छिन्नेति । अच्छिन्ना अवच्छिन्ना अमलाश्च सन्तानाः प्रबन्धाः प्रवाहाश्च यासां ताः तथोक्ताः समुद्रोर्म्मिभिः अनिवारिताः पारगमनादन्तःप्रवेशाच्च इति भावः । ते तव कीर्त्तयः सरितश्च गङ्गादयः पुण्यत्वात् पवित्रत्वात् लोकान् पुनन्ति पावयन्ति लोकपावना खलु पुण्यश्लोका इति भावः । केवलप्रकृतविषयस्तुल्ययोगितालङ्कारः ॥ ६९ ॥

यथेति । गङ्गा भागीरथी प्रभवत्यस्मात् इति प्रभवः तेन कारणेन परमे तिष्ठतीति परमेष्ठिनः विष्णोः । 'परमे कित्' इति कितप्रत्ययः, 'तत्पुरुषे कृति बहुलम्' इति अलुक् 'परमे वर्हिर्दिव्यग्निभ्यः स्थः' इति षत्वम् । पादेन चरणेन यथा एव श्लाघ्यते प्रशस्यते तथा एव द्वितीयेन प्रभवेण उच्छिरसा

1 मृणालानि इव मृदूनि तैः ।
2 आरसातलमूलात् रसायाः पृथिव्याः तलं तस्य मूलं तस्मात् ।

प्रभवेण द्वितीयेन तथैवोच्छिरसा त्वया ॥ ७० ॥
तिर्य्यगूर्द्धमधस्ताच्च व्यापको महिमा हरे ।
त्रिविक्रमोद्यतस्यासीत् स तु स्वाभाविकस्तव[१] ॥७१॥
यज्ञभागभुजा[२] मध्ये पदमातस्थुषा[३] त्वया ।
उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम् ॥ ७२ ॥

त्वया श्लाघ्यते, हरिचरणवत् तीर्थस्यापि तीर्थभूतस्त्वम् इति भाव ॥ ७० ॥

तिर्य्यगिति। तिर्य्यक् ऊर्द्धम् अधस्ताच्च व्यापक सर्व्वव्यापी इत्यर्थ, महिमा महत्त्व हरे विष्णो त्रिषु विक्रमेषु उद्यतस्य सत आसीत, त्रिविक्रमोद्यतस्यापि कदाचिदेव न तु सर्व्वदा इत्यर्थ । तव तु व्यापको महिमा स्वाभाविक नित्यसिद्ध इत्यर्थ ॥ ७१ ॥

यज्ञेति। यज्ञभागभजाम इन्द्रादीना मध्ये पदम् आतस्थुषा निहितवता त्वया उच्चै उन्नत हिरण्यस्य विकार हिरण्मयम्। 'दाण्डिनायनहास्तिनायन' इत्यादिना निपातनात् साधु। सुमेरो शृङ्ग शिखर प्राधान्य च ध्वन्यते। 'शृङ्ग प्राधान्यसान्वोश्च' इत्यमर । वितथीकृत व्यर्थीकृत तस्य यज्ञभागाभावात् इति भाव । अस्य तु तत्सद्भावे प्रमाणम 'हिमवतो हस्ती' इति श्रुति ॥ ७२ ॥

पुरा किल भगवान् विष्णु वामनरूपी छद्मना दैत्यराज बलि त्रिपादपरिमिता भूमि ययाचे । दत्ता च सा तस्मै प्रतारितेन दैत्यपतिना । अथ प्रकटितविश्वरूपेण वज्रिणा द्वाभ्यामेव विक्रमाभ्या (पादाभ्या) त्रिभुवनानि व्यानशिरे इति पौराणिकी वार्त्ता ।

२ यज्ञस्य भागान् भुञ्जते ये ते तेषाम ।

३ आपूर्वात् स्थाधातो कर्त्तरि अतीते क्वसु ।

काठिन्यं स्थावरे काये भवता सर्व्वमर्पितम्[१]।
इदं तु ते भक्तिनम्रं सतामाराधनं वपुः॥ ७३॥
तदागमनकार्य्यं नः शृणु कार्य्यं तवैव तत्।
श्रेयसामुपदेशात्[२] तु वयमत्रांशभागिनः॥ ७४॥
अणिमादिगुणोपेतम्[३] अस्पृष्टपुरुषान्तरम्।
शब्दमीश्वर इत्युच्चैः सार्द्धचन्द्रं बिभर्त्ति यः॥ ७५॥

काठिन्यमिति। भवता सर्व्वं काठिन्यम् अनम्रत्वम् इत्यर्थः स्थावरे स्थिरे काये शिलामये इत्यर्थः अर्पितं न्यस्तं सताम् अर्हताम् आराधनं पूजासाधनं ते इदं वपुस्तु जङ्गमम् इत्यर्थः भक्तिनम्रं काठिन्यलेशोऽप्यत्र नास्ति अन्यथा नम्रत्वासम्भवात् इत्यर्थः तथा चासाधारण्यं व्यज्यते॥ ७३॥

तदिति। तत् तस्मात् नः अस्माकम् आगमनस्य कार्य्यं प्रयोजनं शृणु तत् कार्य्यं च तव एव न त्वस्माकमित्यवधारणार्थः एवकारः। वयं तु श्रेयसाम् उपदेशात् अत्र कार्य्ये अंशभागिनः, त्वमेवात्र फलभाक् वयमुपदेष्टारः इति भावः॥७४॥

कार्य्यमेवाह अणिमेत्यादिना, अणिमेति। यः शम्भुः अणिमादिगुणोपेतम् अणिमादिभिः अष्टभिः गुणैः वाच्यभूतैः उपेतम् अष्टैश्वर्य्यवाचकमित्यर्थः अत एव अस्पृष्टं पुरुषान्तरं येन तं तथोक्तं पुरुषान्तरस्य अनभिधायकं तस्यैव एवंगुणत्वात् इत्यर्थः उच्चैः परमम् ईश्वर इति शब्दं निरुपपदेश्वरशब्दम् इत्यर्थः सार्द्धचन्द्रम् अर्द्धचन्द्रयुक्तं अर्द्धचन्द्रञ्च इत्यर्थः बिभर्त्ति॥ ७५॥

---

१ ऋ गतौ इति ऋधातोर्णिजन्तात् कर्मणि क्तः।

२ श्रेयसां माङ्गल्यकर्म्मणाम्।

३ अणिमादिगुणाः 'अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ईशित्वञ्च वशित्वञ्च तथा कामावसायिता॥' इति।

कल्पितान्योऽन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः।
येनेदं ध्रियते विश्वं धुर्य्यैर्यानमिवाध्वनि ॥ ७६ ॥
योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्त्तिनम्[१]।
अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ॥ ७७ ॥
स ते दुहितरं साक्षात् साक्षी विश्वस्य कर्म्मणाम्।
वृणुते वरदः शम्भुः अस्मत्संक्रामितैः पदैः ॥ ७८ ॥

कल्पितेति। येन आत्मना कल्पितः धृतिसंग्रहादिस्वस्वगुण-सम्पादितः अन्योऽन्यसामर्थ्यैः परस्परसहकाररूपः यैः तथोक्तैः स्वस्वरूपसामर्थ्यम् अन्योऽन्याधेयमेव इति भावः, पृथिव्यादिभिः आत्मभिः अष्टाभिः मूर्त्तिभिः इत्यर्थः इदं व्यक्तं विश्वं, धुरं वहन्ति इति धुर्य्यैः अश्वैः। 'धुरो यड्ढकौ' इति यत्प्रत्ययः। अध्वनि यानं रथः इव, ध्रियते ॥ ७६ ॥

योगिन इति। योगिनः अध्यात्मवेदिनः क्षेत्राभ्यन्तरवर्त्तिनं शरीरान्तश्चरं सर्व्वभूतान्तर्यामिनं परमात्मस्वरूपिणम् इत्यर्थः 'क्षेत्रं पत्नीशरीरयोः' इत्यमरः। यं शम्भुं विचिन्वन्ति मृगयन्ते। मनीषिणः विद्वांसः यस्य शम्भोः पदं स्थानम् अविद्यमानम् आवृत्तेः पुनः संसारापत्तेः भयं यत्र तत् यथाभूतम् आहुः ॥ ७७ ॥

स इति। विश्वस्य जगतः कर्म्मणां साक्षी द्रष्टा। 'साक्षाद् द्रष्टरि संज्ञायाम्' इति इनिप्रत्ययः। वरान् इष्टान् ददाति इति वरदः 'आतोऽनुपसर्गे कः' इति कप्रत्ययः। सः पूर्व्वोक्तः शम्भुः अस्मत्संक्रामितैः पदैः अस्मासु निवशितैः वाक्यैः ते दुहितरं साक्षात् वृणुते अस्मन्मुखेन स्वयमेव याचते इत्यर्थः ॥ ७८ ॥

१ क्षेत्रस्य अभ्यन्तरे वर्त्तते यः स क्षेत्राभ्यन्तरवर्त्ती तम्।

तमर्थमिव भारत्या सुतया योक्तुमर्हसि ।
अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ॥ ७९ ॥
यावन्त्येतानि भूतानि स्थावराणि चराणि[1] च ।
मातरं कल्पयन्त्वेनाम् ईशो हि जगतः पिता ॥ ८० ॥
प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ।
चरणौ रञ्जयन्त्वस्याः चूडामणिमरीचिभिः[2] ॥ ८१ ॥
उमा वधूर्भवान् दाता याचितार इमे वयम् ।

तमिति । तं शम्भुं भारत्या वाचा अर्थम् अभिधेयम् इव, सुतया दुहित्रा योक्तुं सङ्घटयितुम् अर्हसि । अत्र वागर्थयो-रुपमानत्वसामर्थ्यात् शिवयोर्नित्ययोगो विवक्षित इत्युक्तं 'वागर्थाविव सम्पृक्तौ' इत्यत्रापि । तथाहि, सद्भर्त्रे प्रतिपादिता दत्ता कन्या पितुः अशोच्या ॥ ७९ ॥

गणान्तरमप्याह यावन्तीति । स्थावराणि चराणि च यावन्ति एतानि भूतानि सन्ति इति शेषः सर्व्वाणि भूतानि इत्यर्थः एनां ते दुहितरं मातरं कल्पयन्तु । हि यस्मात् ईशः जगतः पिता, पितृदारेषु मातृभावो न्याय्य इति भावः ॥ ८० ॥

प्रणम्येति । विबुधाः देवाः शितिकण्ठाय शिवाय प्रणम्य तदनन्तरं नीलकण्ठप्रणामानन्तरम् अस्याः चरणौ चूडामणि मरीचिभिः रञ्जयन्तु ईश्वरपरिग्रहादखिलदेवतावन्द्या भवतु इत्यर्थः ॥ ८१ ॥

उमेति । उमा वधूः, भवान् दाता इमे वयं याचितारः

---

१ चरन्ति यानि तानि चराणि जङ्गमानि ।

२ चूडामणिमरीचिभिः चूडायाः ये मणयः तेषां मरीचयः किरणाः ताभिः ।

वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः१ ॥ ८२॥
अस्तोतुः स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः ।
सुतसम्बन्धविधिना भव विश्वगुरोर्गुरुः ॥ ८३ ॥
एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्त्राणि गणयामास पार्व्वती ॥ ८४ ॥
शैलः सम्पूर्णकामोऽपि मेनामुखमुदैक्षत२ ।

प्रार्थकः, शम्भुः वरः वोढा, एष विधिः एषा सामग्री त्वत्कुलस्य उद्भूतये उच्छ्रयाय अलं पर्य्याप्तः हि। 'नमःस्वस्ति स्वाहास्वधा' इत्यादिना चतुर्थी ॥ ८२ ॥

अस्तोतुरिति। स्वयम् अन्यस्तोता न भवति इति अस्तोतुः किन्तु स्तूयमानस्य सर्व्वैःस्तुत्यस्य वन्द्यस्य जगद्वन्द्यस्य स्वयम् अन्यं न वन्दते इति अनन्यवन्दिनः विश्वगुरोः देवस्य सुतासम्बन्धविधिना यौनसम्बन्धाचरणेन गुरुः भव। यो नान्यं स्तौति न वन्दते तस्यापि त्वं स्तुत्यो वन्द्यश्च इत्यहो तव भाग्यवत्ता इत्यर्थः ॥ ८३ ॥

एवमिति। देवर्षौ अङ्गिरसि एवं वादिनि सति पार्व्वती पितुः पार्श्वे अधोमुखी सती लज्जया इति शेषः लीलाकमलपत्त्राणि गणयामास सङ्ख्यौ लज्जावशात् कमलदलगणनाव्याजेन हर्षं जगोप इत्यर्थः, अनेन अवहित्थाख्यः सञ्चारी भाव उक्तः। तदुक्तम्, 'अवहित्था तु लज्जादेर्हर्षाद्याकारगोपनम्' इति ॥ ८४ ॥

शैल इति। शैलः हिमवान् सम्पूर्णकामः अपि दात

१ अनुष्ठानम्।

२ उदैक्षत इदपाठः।

प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ॥ ८५ ॥
मेने मेनापि तत् सर्व्वं पत्युः कार्य्यमभीप्सितम्[१] ।
भवन्त्यव्यभिचारिण्यो भर्त्तुरिष्टे पतिव्रताः ॥ ८६ ॥
इदमत्रोत्तरं न्याय्यम् इति बुद्ध्या विमृश्य सः ।
आददे वचसामन्ते मङ्गलालङ्कृतां सुताम् ॥ ८७ ॥
एहि विश्वात्मने वत्से भिक्षासि परिकल्पिता ।

कृतनिश्चयोऽपि इत्यर्थः, मेनामुखम् उदैक्षत उचितोत्तर-जिज्ञासया इति भावः। तथाहि प्रायेण कुटुम्बिनः गृहस्थाः कन्यार्थेषु कन्याप्रयोजनेषु गृहिणी एव नेत्रं कार्य्यज्ञानकारणं येषां ते तथोक्ताः कलत्रप्रधानवृत्तयः इत्यर्थः ॥ ८५ ॥

मेने इति। मेना अपि पत्युः हिमालयस्य तत् सर्व्वम् अभीप्सितं कार्य्यं मेने अङ्गीचकार। तथाहि, पतिः एव व्रतं यासां ताः भर्त्तुः इष्टे अभीप्सिते न विद्यते व्यभिचारः यासां ताः अव्यभिचारिण्यः भवन्ति भर्त्तृचित्ताभिप्रायज्ञाः भवन्ति इति भावः ॥ ८६ ॥

इदमिति। सः हिमवान् वचसाम् अन्ते मुनिवाक्यावसाने अत्र मुनिवाक्ये इदम् उत्तरश्लोके वक्ष्यमाणं दानम् एव न्याय्यं न्यायात् अनपेतम् उत्तरम् इति बुद्ध्या चित्तेन विमृश्य विचिन्त्य मङ्गलं यथा तथा अलङ्कृतां मङ्गलालङ्कृतां सुताम् आददे हस्ताभ्यां जग्राह ॥ ८७ ॥

एहीति। हे वत्से ! पुत्रि ! एहि आगच्छ त्वं विश्वात्मने शिवाय भिक्षा परिकल्पिता असि निश्चिता असि 'रत्नादि-स्वस्वपर्य्यन्तं सर्व्वं भिक्षा तपस्विनः' इति वचनात् इति भावः।

---

१ अभीप्सितम् आप्तुमिष्टम्। अभि आ पूर्व्वात् आपधातोः सन्नन्तात् कर्म्मणि क्तः।

अर्थिनो मुनयः प्राप्तं गृहमेधिफलं[१] मया ॥ ८८ ॥
एतावदुक्त्वा तनयाम् ऋषीनाह महीधरः।
इयं नमति वः सर्व्वान् त्रिलोचनवधूरिति ॥ ८९ ॥
ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः।
आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम् ॥ ९० ॥
तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम्।
अङ्कमारोपयामास लज्जमानामरुन्धती ॥ ९१ ॥

अर्थिनः याचितारः मुनयः मया गृहमेधिनः गृहस्थस्य फलं प्राप्तम्, इह परत्र च तारकत्वात् पात्रे कन्यादानं गार्हस्थ्यस्य फलम् इत्यर्थः ॥ ८८ ॥

एतावदिति। महीधरः हिमवान् तनयाम् एतावत् पूर्व्वोक्तम् उक्त्वा ऋषीन् आह। किमिति? इयं त्रिलोचनवधूः त्र्यम्बकपत्नी वः सर्व्वान् नमति इति। त्रिलोचनवधूरिति सिद्धवदभिधानेन प्रतिपन्नं दानमिति सूचयति ॥ ८९ ॥

ईप्सितेति। ते मुनयः ईप्सितार्थक्रियया इष्टार्थकरणेन उदारं महत्। 'उदारो दातृमहतोः' इत्यमरः। गिरेः हिमवतः वचः वचनम् अभिनन्द्य साधु इति सस्तुत्य अम्बिकाम् अम्बां पच्यते इति पाकः फलं पुरःपाकाभिः पुरस्कृतफलाभिः आशीर्भिः आशीर्वादैः एधयामासुः वर्द्धयामासुः ॥ ९० ॥

तामिति। प्रणामादरेण नमस्कारासक्त्या स्रस्ते जाम्बूनदे सुवर्णविकारे वतंसके कनककुण्डले यस्याः तां लज्जमानां ताम् अम्बिकाम् अरुन्धती अङ्कम् आरोपयामास। 'इह पोऽन्यतरस्याम्' इति पकारः ॥ ९१ ॥

---

[१] गृहैः दारैः मेधन्ते सङ्गच्छन्ते ये ते गृहमेधाः तस्य फलम्।

तन्मातरञ्चाश्रुमुखी दुहितृस्नेहविक्लवाम्।
वरस्यानन्यपूर्व्वस्य विशोकामकरोद् गुणैः ॥ ८२ ॥
वैवाहिकीं तिथिं पृष्टा तत्क्षणं हरबन्धुना।
त्र्यहादूर्द्ध्वमाख्याय चेरुश्चीरपरिग्रहाः ॥ ८३ ॥
ते हिमालयमामन्त्र्य पुनः प्राप्य च शूलिनम्।

तदिति। दुहितृस्नेहेन पत्रिकाप्रेमणा विक्लवां वियोज्यते इति भीताम् अत एव अश्रूणि मुखे यस्याः ताम् अश्रुमुखीं तस्याः अम्बिकायाः मातरं तन्मातरं मेनां च अन्या पूर्व्वा यस्य अस्ति सः अन्यपूर्व्वः। सर्व्वनाम्नो वृत्तिविषये पुंवद्भाव इति पूर्व्वपदस्य पुंवद्भावः। सः न भवति इति अनन्यपूर्व्वः तस्य अनन्यपूर्व्वस्य सापत्न्याद् खमकुर्व्वत इत्यर्थः वरस्य वोढुः गुणैः मृत्युञ्जयत्वादिभिः विशोकां निर्दुःखाम् अकरोत् ॥ ८२ ॥

वैवाहिकीमिति। चीरपरिग्रहाः वल्कलमात्रवसनाः ते तपस्विनः तत्क्षणं तस्मिन् एव क्षणे हरबन्धुना हिमवतः वैवाहिकीं विवाहयोग्यां तिथिं पृष्टाः केत्यनुयुक्ताः सन्तः त्रयाणाम् अह्नां समाहारः त्र्यहः 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः, 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययः द्विगुत्वादेकवचनम्, 'रात्राह्नाहाः पुंसि' इति पुंलिङ्गता। तस्मात् त्र्यहात् ऊर्द्ध्वम् उपरि आख्याय चतुर्थे अहनि विवाहः इति उक्त्वा चेरुः चलिताः ॥ ८३ ॥

त इति। ते मुनयः हिमालयम् आमन्त्र्य साधु याम इति आपृच्छ्य पुनः शूलिनं हरं सङ्केतस्थानस्थं प्राप्य सिद्धं निष्पन्नम् अर्थं प्रयोजनं तस्मै निवेद्य ज्ञापयित्वा च तद्विसृष्टाः तेन शूलिना विसृष्टाः खम् आकाशं प्रति उद्ययुः उत्पेतुः। अत्र सङ्क्षिप्तार्थाभिधानात् सङ्क्षेपो नाम गुणः उक्तः।

सिद्धश्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ ९४ ॥

पशुपतिरपि तान्यहानि कृच्छ्रात्
अगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्य्यु
र्विभुमपि तं यदमी स्पृशन्ति भावाः ॥ ९५ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
उमाप्रदानो नाम षष्ठः सर्गः ।

तदुक्तम्, सर्वाश्चप्रार्थाभिधानं यत् स उद्धयः परिकीर्त्तित
ति ॥ ९४ ॥

भगवान् पशुपतिः त्र्यहमात्रविलम्बमपि सोढुं न शशाक
।दौत्सुक्यादित्याह, पशुपतिरिति । उत्कं मनः यस्य स उत्कः
उत्क उन्मना' इति निपातः । अद्रिसुतासमागमोत्कः पार्वती
परिणयौत्सुकः पशुपतिः अपि तानि त्रीणि इति शेषः अहानि
कृच्छ्रात् अगमयत् अयापयत् । कविराह, अमी भावाः औत्
सुक्यादयः सञ्चारिणः अवशम् इन्द्रियपरतन्त्रम् अपरं पृथग्जन
कं न विप्रकुर्य्युः न विकारं नयेयुः । यत् यस्मात् विभुं समर्थ
जितेन्द्रियमपि यावत् तं स्मरहरम् अपि स्पृशन्ति विकुर्व्वन्ति
इत्यर्थः । अत्र विभुविकारसमर्थनात् स्थादितरजनविकारः कैमु-
तिकन्यायादापततीति अर्थापत्तिरलङ्कारः । तथा च सूत्रम्
'दण्डापूपिकयार्थान्तरापतनमर्थापत्तिः' इति । अर्थान्तरन्यास
इति केचित्, तदुपेक्षणीयं युक्तम्, विस्तरभयान्नोच्यते । पुष्पि
ताग्रावृत्तम् 'अयुजि न युगरेफतो यकारो युजि च नजौ जर-
गाश्च पुष्पिताग्रा' इति लक्षणात् ॥ ९५ ॥

इति श्रीमहामहोपाध्याय कोलाचलमल्लिनाथ-सूरिविरचितायां
कुमारसम्भवव्याख्यायां सञ्जीविनीसमाख्यायां षष्ठः सर्गः ।

# सप्तम सर्ग ।

अथौषधीनामधिपस्य वृद्धौ
तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान् सुताया
विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १ ॥
वैवाहिकैः कौतुकसंविधानै-
र्गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ।

अथेति । अथ व्यहानन्तर हिमवान ओषधीनाम् अधि पस्य चन्द्रस्य वृद्धौ शुक्लपक्षे इत्यर्थं । शुभकर्मसु आपूर्य्य-माणपक्षस्य प्राशस्त्यात् । तिथौ च जामित्र लग्नात् सप्तम स्थान तस्य गण शुद्धि सा च ग्रहराहित्य तेन अन्वितायां सत्याम् । यद्यपि जामित्रशुद्धिर्लग्नधर्म्म तथापि तद्द्वारा तिथे रपि तथा व्यपदेशे न दोष । समेतबन्धु युक्तबन्धु सन् सुताया दुहितु विवाहदीक्षा विवाहसंस्कार सा एव विधि कर्म्म तम् अन्वतिष्ठत कृतवान ॥ १ ॥

वैवाहिकैरिति । अनुरागात प्रीतिवशात गृहे गृहे प्रति गृहम् । वीप्सायां द्विभाव । विवाह प्रयोजनम् एषाम् इति वैवाहिकानि तै । 'तदस्य प्रयोजनम' इति ठक् । कौतुक विधाने मङ्गलार्थसम्पादने व्यग्र व्याकुल पुरन्ध्रिवर्ग कुटु-म्बिनीसंघ यस्मिन तत् तथोक्त सानुमत अद्रे पुर वाच्यम अपोधिमध्यम् अन्त पुरम अवरोधन च एककुलेन एकगृहण

आसीत् पुरं सानुमतोऽनुरागात्
अन्तःपुरञ्चैककुलोपमेयम् ॥ २ ॥
सन्तानकाकीर्णमहापथं तत्
चीनांशुकैः कल्पितकेतुमालम् ।
भासोज्ज्वलत्काञ्चनतोरणानां[1]
स्थानान्तरं स्वर्ग इवाबभासे ॥ ३ ॥
एकैव सत्यामपि पुत्त्रपङ्क्तौ
चिरस्य दृष्टेव मृतोत्थितेव[2] ।

एककुलेन एकगोत्रेण वा उपमेयम् आसीत्। सजातीयगणे गोत्रे गृहेऽपि कथितं कुलम्' इति विश्वः । सर्वेषामपि स्वगृहे एव इदं शोभनं वर्त्तते इत्यभिमानोऽभूत् इत्यर्थः, एतेन हिमाद्रेः प्रजानुराग उक्तः । अत्र सर्व्वं सम्पन्नमेव इत्यर्थः ॥ २ ॥

सन्तानेति। सन्तानकैः मन्दारकुसुमैः आकीर्णाः आस्तृता महापथाः राजकीयपथाः यस्मिन् तत् यथोक्तं चीनांशुकैः पट्टवस्त्रैः कल्पिता विरचिता केतुमाला ध्वजपङ्क्तयः यस्य तत् तथोक्तं काञ्चनतोरणानां भासा प्रभया उज्ज्वलत् दीप्यमानं तत् पुरं, स्थानान्तरं मेरोः अन्यत्र स्थितः स्वर्गः इव आबभासे, उत्प्रेक्षालङ्कारः ॥ ३ ॥

एकैवेति। पुत्राश्च दुहितरश्च पुत्त्राः । 'भ्रातृपुत्त्रौ स्वसृदुहितृभ्याम्' इत्येकशेषः 'पुत्त्रौ पुत्त्रश्च दुहिता च' इत्यमरः । तेषां पङ्क्तौ सन्ततौ सत्याम् अपि उमा एका एव चिरस्य

१ तोरणानां बहिर्द्वाराणां । तोरणोऽस्त्री बहिर्द्वारम् इत्यमरः ।

२ मृतोत्थिता मृता सती उत्थिता प्राप्तजीवना इत्यर्थः ।

आसन्नपाणिग्रहणेति[१] पित्रो
उमा विशेषोच्छ्वसितं बभूव ॥ ४ ॥
अङ्काद् ययावङ्कमुदीरिताशी
सा मण्डनान्मण्डनमन्वभुङ्क्त[२] ।
सम्बन्धिभिन्नोऽपि गिरेः कुलस्य
स्नेहस्तदेकायतनं जगाम ॥ ५ ॥
मैत्रे मुहूर्त्ते शशलाञ्छनेन
योगं गतासूत्तरफल्गुनीषु ।

दृष्टा इव चिरात् नष्टलब्धा इव मृतोत्थिता इव मृता पुनः उत्पन्ना इव आसन्नपाणिग्रहणा आसन्नविवाहा इति अन्यगृहं गमिष्यतीति हेतोः इत्यर्थः । पित्रोः मातापित्रोः 'पिता मात्रा' इत्येकशेषः । विशेषेण उच्छ्वसितं प्राणभूता बभूव, पुत्रपत्यादपि अधिकप्रेमास्पदमभूत् इत्यर्थः ॥ ४ ॥

अङ्कादिति । सा पार्वती उदीरिताशीः प्रयुक्ताशीर्वादा सती अङ्कात् अङ्कम् उत्सङ्गं ययौ, मण्डनात् मण्डनान्तरम् अन्यत् मण्डनम् अन्वभुङ्क्त, तदा सर्व्वे बन्धवः प्रत्येकमेव तामङ्कमारोप्य मण्डनं प्रायच्छन् इत्यर्थः । तच्च स्नेहनिबन्धनमेवेत्याह सम्बन्धिभिः स्वपुत्रादिभिः भिन्नः विभक्तः अपि गिरेः कुलस्य वंशस्य स्नेहः तदेकायतनं सा एव एकम् आयतनं स्थानं तत् जगाम । तदिति क्लीबेऽप्ययमेवार्थः विधेयप्राधान्यान्नपुंसकत्वमिति । सर्व्वे बन्धवः स्वापत्येभ्योऽपि तस्यामधिकं स्निह्यन्ति इति तात्पर्य्यार्थः ॥ ५ ॥

मैत्र इति । अथ मैत्रे मित्रदैवत्ये मुहूर्त्ते उदयमुहूर्त्तात्

१ आसन्नपाणिग्रहणा आसन्नं पाणिग्रहणं यस्याः सा ।

२ अन्वभुङ्क्त अनुभव परिहितवती इति यावत् ।

तस्याः शरीरे प्रतिकर्म्म चक्रु
बन्धुस्त्रियो याः पतिपुत्त्रवत्य१ ॥ ६ ॥
सा गौरसिद्धार्थनिवेशवद्भि २
दूर्व्वाप्रवालैः प्रतिभिन्नशोभम्३ ।
निर्नाभि कौशेयमुपात्तबाणम्
अभ्यङ्गनेपथ्यमलञ्चकार ॥ ७ ॥

तृतीयमुहूर्त्त इत्यर्थः । 'आर्द्रः सार्द्रस्तथा मैत्रः शुभो वासव एव च' इति वृहस्पतिस्मरणात् । उत्तरफल्गुनीषु फल्गुनी नक्षत्रे 'फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे' इत्येकस्मिन्नपि वहु वचनम् । शशलाञ्छनेन चन्द्रेण योगं गतासु सतीषु तस्याः पार्व्वत्याः शरीरे बन्धुस्त्रियः प्रतिकर्म्म प्रसाधनम । 'प्रतिकर्म्म प्रसाधनम्' इत्यमरः । चक्रुः । कीदृश्यः ? याः पतिपुत्रवत्यः जीवद्भर्तृका जीवदपत्याश्च इत्यर्थः ॥ ६ ॥

प्रतिकर्म्मप्रकारमेव प्रपञ्चयति, सेति । सा गौरी गौर सिद्धार्थनिवेशवद्भिः श्वेतसर्षपप्रक्षेपवद्भिः दूर्व्वाप्रवालैः दूर्व्वाङ्कुरैः प्रतिभिन्नशोभं विशेषितशोभं निर्नाभि अतिक्रान्तनाभि कौशेयं वस्त्रविशेषः यस्मिन तत् तथोक्तम् । 'कौशेयं क्रिमिकोशोत्थम' इत्यमरः । उपात्तबाणं गृहीतशरम् 'शरः क्षत्रियया ग्राह्यः' इति मनुस्मरणात् । अभ्यङ्गनेपथ्यम् अभ्यङ्गवेशम अलञ्चकार अलङ्कारमप्यलञ्चकार इत्यर्थः ॥ ७ ॥

१ पतिः पुत्राश्च विद्यन्ते यासां ताः ।
२ गौरसिद्धार्थस्य निवेशः विद्यते येषु तैः ।
२ प्रतिभिन्ना शोभा यस्मिन तत् तथोक्तम ।

बभौ च सम्पर्कमुपेत्य बाला
नवेन दीक्षाविधिसायकेन ।
करेण भानोर्बहुलावसाने
सन्धुक्ष्यमाणेव शशाङ्करेखा ॥ ८ ॥

तां लोध्रकल्केन हृताङ्गतैलाम्
आश्यानकालेयकृताङ्गरागाम् ।
वासो वसानामभिषेकयोग्यं
नार्य्यश्चतुष्काभिमुखं व्यनैषुः ॥ ९ ॥

विन्यस्तवैदूर्य्यशिलातलेऽस्मिन्
आबद्धमुक्ताफलभक्तिचित्रे ।

बभाविति । किञ्च इति चार्थः । बाला नवेन दीक्षाविधौ विवाहकृत्ये यः सायकः तेन सम्पर्कम् उपेत्य बहुलावसाने कृष्णपक्षात्यये शुक्लपक्षादौ इत्यर्थः, भानोः करेण किरणेन सन्धुक्ष्यमाणा उपचीयमाना 'सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् क्षपयन्ति' इत्यादिवचनात् । शशाङ्करेखा इव, बभौ ॥ ८ ॥

तामिति । लोध्रकल्केन लोध्रचूर्णेन हृतम् अङ्गतैलं यस्याः तां कृतोद्वर्त्तनाम् इत्यर्थः । आश्यानम् ईषत् शुष्कं तेन कालेयेन गन्धद्रव्येण कृताङ्गरागां कृतस्नानाम् इत्यर्थः । अथ जायकं कालेयकञ्च कालानुसार्य्यञ्च' इत्यमरः । अभिषेकयोग्यं वासः वस्त्रं वसानां स्नानशाटीम् आच्छादयन्तीं तां पार्व्वतीं नार्य्यः चतुष्कं चतुःस्तम्भगृहं तदभिमुखं व्यनैषुः स्नानगृहं निन्युः इत्यर्थः ॥ ९ ॥

विन्यस्तेति । विन्यस्तं वैदूर्य्यशिलातलं मरकतशिलाप्रदेशः

आवर्ज्जिताष्टापदकुम्भतोयैः
सतूर्य्यमेनां स्नपयाम्बभूवुः ॥ १० ॥
सा मङ्गलस्नानविशुद्धगात्री
गृहीतपत्युद्गमनीयवस्त्रा।
निर्वृत्तपर्जन्यजलाभिषेका
प्रफुल्लकाशा वसुधेव रेजे ॥ ११ ॥
तस्मात् प्रदेशाच्च वितानवन्तं
युक्तं मणिस्तम्भचतुष्टयेन।

यस्मिन् तस्मिन् आबद्धानां मुक्ताफलानां भक्तिभिः रचनाभिः चित्रे अस्मिन् चतुष्के एनां पार्व्वतीम् आवर्ज्जितानाम् आनमितानाम् अष्टापदकुम्भानां कनककलसानां तोयैः सतूर्य्यं मङ्गलवाद्ययुक्तं यथा तथा स्नपयाम्बभूवुः, अष्टसु लोहेषु पदं प्रतिष्ठा यस्य इति अष्टापदम् 'अष्टनः संज्ञायाम्' इति दीर्घः अष्टापदं स्यात् कनकम् इति विश्वः ॥ १० ॥

सेति। मङ्गलार्थस्नानेन विशुद्धगात्री निर्म्मलाङ्गी पत्युः वरस्य उद्गमनीयवस्त्रं धौतवस्त्रम्। धौतमुद्गमनीयं स्यात्' इति हलायुधः, 'ततः स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्' इत्यमरः, युगग्रहणन्तु प्रायिकाभिप्रायम्। अत एवात्र क्षीरस्वामी युगं प्रायशः यत्तच्च तदेव इति व्याख्याय गृहीतपत्युद्गमनीयवस्त्रेत्येतदेव उदाहृतवान्। गृहीतं पतिं प्रति उद्गमनीयवस्त्रं यया सा धौतवस्त्रमाच्छादितवती इत्यर्थः सा पार्व्वती निर्वृत्तः निष्पन्नः पर्ज्जन्यस्य जलेन अभिषेकः यस्याः सा तथोक्ता प्रफुल्लतीति प्रफुल्लाः काशः काशपुष्पं यस्याः सा तथोक्ता वसुधा इव, रेजे शुशुभे ॥ ११ ॥

पतिव्रताभि परिगृह्य निन्ये
क्लृप्तासनं कौतुकवेदिमध्यम्[1] ॥ १२ ॥
तां प्राङ्मुखीं तत्र निवेश्य तन्वीं
क्षणं व्यलम्बन्त[2] पुरो निषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः
प्रसाधने सन्निहितेऽपि नार्य्यः ॥ १३ ॥
धूपोष्मणा त्याजितमार्द्रभावं
केशान्तमन्तःकुसुमं तदीयम् ।

तस्मादिति। किञ्चेति चाथ। तस्मात् प्रदेशात् स्नानप्रदेशात् वितानवन्तम् उल्लोचयुक्तम्। अस्त्री वितानमुल्लोच इत्यमरः। मणिस्तम्भचतुष्टयेन युक्तं क्लृप्तं सज्जमानम् आसनं यस्मिन् तं कौतुकवेदिमध्यं पतिव्रताभिः परिगृह्य दोर्भ्याम् आलिङ्ग्य निन्ये नीता प्रसाधनार्थम् इत्यर्थः ॥ १२ ॥

तामिति। नार्य्यः प्रसाधिकाः तां तन्वीं पार्व्वतीं तत्र वेदिमध्ये प्राङ्मुखीं निवेश्य उपवेश्य पुरः निषण्णाः अग्रे स्थिताः प्रसाध्यते अनेन इति प्रसाधने अलङ्कारसाधनवर्गे सन्निहिते अपि भूतार्था सत्यरूपा स्वाभाविकी इति यावत् या शोभा रामणीयकं तया ह्रियमाणानि आकृष्यमाणानि नेत्राणि यासां ताः तथोक्ताः क्षणं व्यलम्बन्त, स्वभावसुन्दर्य्याः किमस्याः प्रसाधनेनेति तूष्णीं तस्थुः इत्यर्थः ॥ १३ ॥

धूपेति। काचित् प्रसाधिका धूपोष्मणा करणेन आर्द्रभावम् आर्द्रत्वं त्याजितम्। पचादिषु पाठात् द्विकर्म्मकत्वम्,

---

१ कौतुकवेदिं माङ्गल्यवेदिं तस्या मध्यम्।

२ विलम्बं चक्रुः।

पर्य्याक्षिपत् काचिदुदारबन्धं१
दूर्व्वावता पाण्डुमधूकदाम्ना ॥ १४ ॥
विन्यस्तशुक्लागुरु चक्रुरङ्ग
गोरोचनापत्रविभक्तमस्याः ।
सा चक्रवाकाङ्कितसैकतायाः
त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥ १५ ॥
लग्नद्विरेफं२ परिभूय पद्मं
समेघरेखं शशिनश्च बिम्बम् ।

त्यजतेर्ण्यन्तादप्रधाने कर्म्मणि क्तः। अन्तः कुसुमम् अन्तर्निक्षिप्त कुसुमं तस्याः इमं तदीयं केशान्तं केशपाशं दूर्व्वावता मध्ये मध्ये ग्रथितदूर्व्वेण पाण्डमधूकदाम्ना हरितमधुद्रुमकुसुममाल्येन 'मधूके तु गुडपुष्पमधुद्रुमौ' इत्यमरः। उदारबन्धं रम्यबन्धं यथा तथा पर्य्याक्षिपत बबन्ध ॥ १४ ॥

विन्यस्तेति। अस्याः गौर्य्याः अङ्गं गात्रं विन्यस्तं विरचितं शुक्लागुरु यस्मिन् तत् गोरोचनायाः पत्रैः पत्ररचनाभिः विभक्तं विशेषितं च चक्रुः। सा तथाभूता गौरी चक्रवाकैः अङ्कितं सैकतं यस्याः तस्याः त्रिस्रोतसः गङ्गायाः कान्तिं शोभाम् अतीत्य अतिक्रम्य तस्थौ। अत्र गोरोचनाचक्रवाकयोः पीतत्वेन साम्यं त्रिस्रोतसो धावल्यन्तु प्रसिद्धत्वान्न स्वपदेनोपात्तम् ॥ १५ ॥

लग्नेति। प्रसिद्धे भूषिते प्रसिद्धौ ख्यातभूषितौ इत्यमरः। अलकैः उपलक्षिता तस्याः गौर्य्याः आननश्रीः लग्न

१ उदारबन्धम् उदारः बन्धः यस्मिन् तत्।
२ लग्नाः द्विरेफाः भ्रमराः यस्मिन् तत्।

तदाननश्रीरलकैः प्रसिद्धै-
श्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥ १६ ॥
कर्णार्पितो लोध्रकषायरूक्षे
गोरोचनाक्षेपनितान्तगौरे ।
तस्याः कपोले परभागलाभात्
बबन्ध चक्षूंषि यवप्ररोहः ॥ १७ ॥
रेखाविभक्तः सुविभक्तगात्र्याः
किञ्चिन्मधूच्छिष्टविमृष्टरागः ।

द्विरेफः पद्मः समेघरेखः मेघरेखायुक्तः शशिनः विम्बञ्च परिभूय तिरस्कृत्य सादृश्यम् उपमा तस्य कथा उक्तिः तस्याः प्रसङ्गः प्रसक्तिः सादृश्य वाञ्छात्वप्रसक्तम् अपि चिच्छेद अभिनत् । प्रसक्तयोः पद्मचन्द्रयोः परिभूतत्वादन्यत्र चाप्रसङ्गात् इत्यर्थः । अत्र पूर्व्वार्द्धवाक्यार्थस्य सादृश्यकथाच्छेदं प्रति हेतुत्वेनोपन्यासात् काव्यलिङ्गमलङ्कारः । लक्षणन्तूक्तम् ॥ १६ ॥

कर्णेति । तस्याः गौर्य्याः कर्णे अर्पितः निक्षिप्तः यवप्ररोहः यवाङ्कुरः लोध्रस्य वृक्षविशेषस्य कषायेण विलेपनेन रूक्षे विशदे उद्वर्त्तिते इत्यर्थः । 'कषायो रसभेदे स्यात् अङ्गरागविलेपने' इति विश्वः । गोरोचनायाः क्षेपेण विन्यासेन नितान्तगौरे अत्यन्तारुणे 'गौरः श्वेतेऽरुणे पीते' इति विश्वः । कपोले गण्डस्थले परभागलाभात् वर्णोत्कर्षप्राप्तेः चक्षूंषि दृष्टीनाम् इति शेषः बबन्ध जहार आचकर्ष इत्यर्थः । गोरोचनारुणे गण्डस्थले पाण्डुरो यवाङ्कुरो विजातीयवर्णसन्निधानाल्लब्धवर्णोत्कर्षः सन् चक्षुराकर्षकोऽभूत् इति भावः ॥ १७ ॥

रेखेति । सुविभक्तगात्र्याः सुसश्लिष्टावयवायाः पार्व्वत्याः

कामप्यभिख्यां स्फुरितैरपुष्यत्
　　आसन्नलावण्यफलोऽधरोष्ठ ॥ १८ ॥
पत्यु शिरश्चन्द्रकलामनेन
　　स्पृशेति सख्या परिहासपूर्व्वम् ।
सा रञ्जयित्वा चरणौ कृताशी १
　　माल्येन ता निर्वचन जघान ॥ १९ ॥

रखया मध्यगतया विभक्त सुश्लिष्ट 'किञ्चित ईषत मधूच्छि ष्टेन सिक्थकेन विमृष्ट विशेषेण निर्मलीकृत राग यस्य स तथोक्त । 'मधूच्छिष्टन्तु सिक्थकम् इति, 'निर्णिक्त शोधित मृष्टम' इति च अमर । अन्यत्रोक्तम्, 'लौहित्यापगमाया धरेष सिक्थकलेप क्रियते' आसन्न सन्निहित लावण्यफल सौन्दर्य्यप्रयोजन मुखचुम्बनादिरूप यस्य स तथोक्त अधरोष्ठ स्फुरितै भाविसुखभयसिमि स्पन्दे काम अपि अनिर्वाच्याम् अभिख्या शोभाम् अपुष्यत् पुपोष । 'अभिख्या नामशोभयो रित्यमर ॥ १८ ॥

अस्यैरिति । सख्या कर्त्र्या चरणौ रञ्जयित्वा लाचा रसाक्तौ कृत्वा कृताशीरिति कर्मोतिना समानकर्तृकत्वम् । अनेन चरणेन । रञ्जने द्वयोरपि नियमाच्चरणावित्युक्तापि औचित्यात् ताडनविधौ एकतरपरामर्श इत्याहु । पत्यु ईश्वरस्य शिर श्चन्द्रकला सुरतविशेषे इति शेष स्पृश ताडय इति परिहास पूर्व्व कृताशी प्रयुक्ताशीर्वादा सा पार्व्वती ता सखी माल्येन मालया । माल्य मालास्रजौ इत्यमर । निर्वचन यथा तथा तूष्णीम् इत्यर्थ जघान ताडयामास । निर्वचनमित्यनेन

१ कृता आशी यस्यै सा ।

तस्याः सुजातोत्पलपत्रकान्ते
प्रसाधिकाभिर्नयने निरीक्ष्य।
न चक्षुषोः कान्तिविशेषबुद्ध्या
कालाञ्जनं मङ्गलमित्युपात्तम्॥ २०॥

सा सम्भवद्भिः कुसुमैर्लतेव
ज्योतिर्भिरुद्यद्भिरिव त्रियामा।
सरिद्विहङ्गैरिव लीयमानै-
रामुच्यमानाभरणा चकाशे॥ २१॥

चित्तताख्यः शृङ्गारानुभाव उक्तः। तदुक्तम् 'प्राप्तकालन्तु यद् ब्रूयात् कुर्याद्वा विहृतं हि तत्' इति॥ १९॥

तस्या इति। प्रसाधिकाभिः अलङ्कर्त्रीभिः सुजाते सम्यक् उत्पन्ने उत्पलपत्रे इव कान्ते रम्ये तस्याः नयने निरीक्ष्य कालाञ्जनम् अञ्जनविशेषः चक्षुषोः कान्तिविशेषबुद्ध्या शोभातिशयो भविष्यतीति बुद्ध्या इत्यर्थः न उपात्तं न गृहीतं किन्तु मङ्गलं शुभमिति हेतोः उपात्तं निसर्गसुभगस्य किमाहार्य्यकाडम्बरेण इति भावः॥ २०॥

सेति। आमुच्यमानाभरणा निबध्यमानाभरणा सा गौरी सम्भवद्भिः उत्पद्यमानैः कुसुमैः लता इव, अनेन पद्मरागेन्द्रनीलादीन्याभरणानि सूचितानि लताकुसुमानां नानावर्णत्वात्। उद्यद्भिः उदयं गच्छद्भिः ज्योतिर्भिः उडुभिः त्रियामा रात्रिः इव अनेन मौक्तिकानि कथितानि। लीयमानैः आश्रयद्भिः निषीदद्भिः इत्यर्थः विहङ्गैः चक्रवाकैः सरित् इव अनेन सुवर्णाभरणानि सूचितानि विहङ्गाश्च तत्सूचनाय चक्रवाका अभिमताः। चकाशे रेजे। अत्र लताकुसुमादीनां जहत्

आत्मानमालोक्य च शोभमानम्
आदर्शबिम्बे स्तिमितायताक्षी[1]।
हरोपयाने त्वरिता बभूव
स्त्रीणां प्रियालोकफलो हि वेशः ॥ २२ ॥
अथाङ्गुलिभ्यां हरितालमार्द्रं
माङ्गल्यमादाय मनःशिलां च।
कर्णावसक्तामलदन्तपत्रं
माता तदीयं मुखमुन्नमय्य ॥ २३ ॥

सर्वाभिनामपमानत्वेनोपादानात् आहार्य्यकर्मपि तस्याः सरज मिवाशोभत इति भावः ॥ २१ ॥

आत्मानमिति। किञ्च इति चार्थः। गौरी शोभमानम् आत्मानं निजशरीरम् आदर्शबिम्बे दर्पणमण्डले। "दर्पणे मुकुरादर्शौ" इत्यमरः। स्तिमितायताक्षी आदरात् निश्चला यतलोचना सती आलोक्य हरोपयाने हरप्राप्तौ त्वरिता व्यग्रा बभूव। स्त्रीणां वेशः नेपथ्यं प्रियस्य भर्त्तुः आलोकः दर्शनं फलं प्रयोजनं यस्य सः तथोक्तः हि। अन्यथा अरण्यचन्द्रिका स्यात् इति भावः। अनेन कालाद्यमलत्वलक्षणमौतसुक्यमुक्तमित्यनसन्धेयम् ॥ २२ ॥

अथेति। अथ प्रसाधनानन्तरं माता मेनका माङ्गल्यं मङ्गलार्थम् आर्द्रं द्रवं हरितालं वर्णद्रव्यविशेषं मनःशिलां धातुविशेषं च अङ्गुलिभ्यां तर्ज्जनीमध्यमाभ्याम् आदाय कर्णयोः अवसक्ते लग्ने अमले दन्तपत्रे यस्य तत् तथोक्तं तस्याः पार्व्वत्याः

१ स्तिमिते आयते विशाले च अक्षिणी यस्याः सा।

उमास्तनोद्भेदमनुप्रवृद्ध
मनोरथो य प्रथम बभूव।
तमेव मेना दुहितु कथञ्चित
विवाहदीक्षातिलकञ्चकार॥ २४॥ (युग्मकम)

बबन्ध चास्राकुलदृष्टिरस्या
स्थानान्तरे कल्पितसन्निवेशम्।
धात्र्यङ्गुलीभि प्रतिसार्य्यमाणम्
ऊर्णामय कौतुकहस्तसूत्रम्॥ २५ ॥

इद तदीय मुखम् उन्नमय्य। विवाहदीक्षातिलक चकार इत्युत्तरश्लोकेनान्वय ॥ २३ ॥

उमेति। उमाया स्तनोद्भेदम अनु स्तनोदयमारभ्य इत्यर्थ प्रवृद्ध वृद्धि गत प्रागेवोत्पन्न इति भाव, य मनोरथ वाञ्छा 'वाञ्छा लिप्सा मनोरथ इत्यमर। प्रथम मनोरथान्तरात् प्राक् अयमेव प्रथमो मनोरथ इत्यर्थ, बभूव। मेना दुहितु तम् एव मनोरथभूतम् एव। तद्विषय तत्तपोचार। विवाहदीक्षाया विवाहकृत्ये तिलक कथञ्चित् कष्टेण चकार आनन्दबाष्पान्धतया इति शेष। विवाहानन्तरभावित्वादन्येषाम् अयमेव प्रथमो मनोरथ इति भाव ॥ २४ ॥ (युग्मकम)

बबन्धेति। अस्या पार्व्वत्या अस्रै आनन्दबाष्पै आकुल दृष्टि अत एव स्थानान्तरे कल्पित सन्निवेश निक्षेप यस्य तत स्वस्थानादन्यत्र स्थापितम् इत्यर्थ। अत एव धात्र्या उपमातु अङ्गुलीभि प्रतिसार्य्यमाण स्वस्थान प्राप्यमाणम् ऊर्णामय मेषादिलोमनिर्मितम् 'ऊर्णा मेषादिलोम्नि स्यात् इत्यमर। कौतुकहस्तसूत्र मङ्गलहस्तसूत्रम्। 'कौतुक मङ्गले हर्षे हस्तसूत्रे

क्षीरोदवेलेव सफेनपुञ्जा
पर्य्याप्तचन्द्रेव१ शरत्त्रियामा२।
नवं नवक्षौमनिवासिनी सा
भूयो बभौ दर्पणमादधाना॥ २६॥
तामर्च्चिताभ्यः कुलदेवताभ्यः
कुलप्रतिष्ठां प्रणमय्य माता।

कुतूहले' इति शाश्वतः। बबन्ध च मेना इति शेषः। पर्वोक्त तिलकक्रियासमुच्चयार्थश्चकारः॥ २५॥

क्षीरोदेति। नवं नूतनं क्षौमं दुकूलं निवस्ते आच्छादयति इति नवक्षौमनिवासिनी। वस्तेराच्छादनार्थाण्णिनि। तथा नवं दर्पणम् आदधाना बिभ्रती सा गौरी सफेनपुञ्जा सहिण्डीर मडक्ति, क्षीरम् उदकं यस्य स क्षीरोदः क्षीरसमुद्रः 'उदकस्योदः सञ्ज्ञायाम्' इति उदादेशः। तस्य वेला तीरभूमिः इव 'वेला काले च जलधेस्तीरे नीरविकारयोः' इति विश्वः। पर्य्याप्तचन्द्रा पूर्णचन्द्रा शरत्त्रियामा शरद्रात्रिः इव भूयः भूयिष्ठं बभौ चकाशे॥ २६॥

तामिति। कारयितव्येषु दक्षा कारयित्री कर्म्मोपदेशकुशला इत्यर्थः माता मेना प्रतितिष्ठति अस्याम् इति प्रतिष्ठा 'आतश्चोपसर्गे' इति कः, स्त्रियां टाप्। कुलस्य प्रतिष्ठा कुलालम्बनभूता स्थितिकारिणीम् इत्यर्थः तां गौरीम् अर्च्चिताभ्यः पूजिताभ्यः कुलदेवताभ्यः गृहदेवताभ्यः प्रणमय्य प्रणामं कार

१ पर्य्याप्तचन्द्रा पर्य्याप्तः सम्पूर्णकलः चन्द्रः यस्यां सा।

२ त्रय आद्यन्तखण्डार्द्धं शेषचतुःखण्डानाञ्च आच्छादिवत्वेन इति भावः यामाः प्रहराः यस्याः सा।

अकारयत् कारयितव्यदक्षा
क्रमेण पादग्रहणं सतीनाम् ॥ २७ ॥
अखण्डितं प्रेम लभस्व पत्यु
रित्युच्यते ताभिरुमा स्म नम्रा ।
तया तु तस्यार्द्धशरीरभाजा
पश्चात्कृता स्निग्धजनाशिषोऽपि ॥ २८ ॥
इच्छाविभूत्योरनुरूपमद्रि १
स्तस्याः कृती कृत्यमशेषयित्वा ।

'यत्वा' 'ल्यपि च' गर्भ्यां इति गोरयादेश । सतीनां पतिव्रतानां पादग्रहणं पादाभिवन्दनं क्रमेण अकारयत् कारयामास 'हृक्रो रन्यतरस्याम्' इति, अन्यत्र च नमेरकर्म्मकत्वात् 'गतिबुद्धि' इत्यादिना अणिकर्त्तुः कर्म्मत्वम् ॥ २७ ॥

अखण्डितमिति। नम्रा प्रणता उमा ताभिः सर्व्वाभिः पत्युः शिवस्य अखण्डितम् अक्षतं प्रेम लभस्व प्राप्नुहि इति उच्यते स्म अभिहिता 'लट् स्मे' इति भूतार्थे लट्। तस्य हरस्य अर्द्धं शरीरस्य अर्द्धशरीरम्। 'अर्द्धं नपुंसकम्' इति समासः। तत् भजति इति अर्द्धशरीरभाजा तया गौर्य्या तु स्निग्धजनाशिषः बन्धुजनाशीर्वादाः अपि पश्चात्कृताः अधरीकृताः, ततो ऽप्यधिकफललाभात् इति भावः ॥ २८ ॥

इच्छाविभूत्योरिति। कृती कुशलः सभायां साधुः सभ्यः 'सभाया यः' इति यप्रत्ययः। अद्रिः हिमवान् इच्छाविभूत्योः उत्साहैश्वर्य्ययोः अनुरूपं सदृशं यथा तथा तस्याः पार्व्वत्याः कृत्यं कर्त्तव्यम् अशेषयित्वा अशेषं निःशेषं कृत्वा समाप्य

१ इच्छाविभूत्योः इच्छा च विभूतिश्च ते तयोः ।

सभ्य सभाया सुहृदास्थितायाः१
तस्थौ वृषाङ्कागमनप्रतीक्ष ॥ २९ ॥
तावद्भवस्यापि कुवेरशैले
तत्पूर्व्वपाणिग्रहणानुरूपम्।
प्रसाधन मातृभिरादृताभि२
न्यस्तं पुरस्तात् पुरशासनस्य ॥ ३० ॥
तद्गौरवान्मङ्गलमण्डनश्री
सा पस्पृशे केवलमीश्वरेण।

इत्यर्थ । अशेषशब्दात् तत्करोतीति ण्यन्तात् क्तप्रत्यय । सुहृदास्थिताया बन्धुजनाक्रान्ताया सभाया सदसि वृषाङ्कस्य हरस्य आगमन प्रतीक्षते इति तथोक्त सन 'कर्म्मण्यण्' इति अण्। तस्थौ स्थित ॥ २९ ॥

तावदिति। तावत यावत् गौरीप्रसाधन क्रियते तत्काले एव इत्यर्थ कुवेरशैले कैलासे तत् एव पूर्व्व तच्च तत पाणिग्रहण तस्य अनुरूप प्रसाधनम अलङ्कारसामग्री आदृताभि सादराभि । कर्त्तरि क्त । मातृभि ब्राह्मीप्रभृतिभि सप्तमातृकाभि पुर शास्ति इति पुरशासन तस्य पुरशासनस्य। कर्त्तरि ल्युट। भवस्यापि पुरस्तात् अग्रे न्यस्त निक्षिप्तम् ॥ ३ ॥

तदिति। ईश्वरेण शिवेन सा मङ्गलमण्डनश्री शुभ प्रसाधनसम्पत् तद्गौरवात् तासु मातृषु आदरात् केवल पस्पृशे स्पृष्टा एव, न तु दधे इत्यवधारणार्थ केवलशब्द 'केवलश्चाव

२ सुहृद्भि आस्थिता या तस्याम्।

१ मातरस्तु 'ब्राह्मी च वैष्णवी चैन्द्री रौद्री वाराहिका तथा। कौवेरी चैव कौमारी मातर सप्त कीर्त्तिता ॥' इति।

स एव वेश परिणेतुरिष्ट
भावान्तरं तस्य विभो प्रपेदे ॥ ३१ ॥
बभूव भस्मैव सिताङ्गराग
कपालमेवामलशेखरश्री ।
उपान्तभागेषु च रोचनाङ्क
गजाजिनस्यैव दुकूलभाव ॥ ३२ ॥
शङ्खान्तरद्योति विलोचन यत्
अन्तर्निविष्टामलपिङ्गतारम्।

धाम' इति शाश्वत । किन्तु तस्य विभो देवस्य स एव वेश स्वाभाविक भस्मकपालादिवेश एव परिणेतु लोके उद्वोढु इष्टम अवेक्षित भावान्तर रूपान्तर प्रपेदे, अङ्गरागादिरूपता प्राप इत्यर्थ ॥ ३१ ॥

भावान्तरापत्तिमेवाह, बभूवेति । भस्म एव सिताङ्गराग शुभ्रगन्धानुलेपन बभूव कपालम् एव अमल शेखर शिरोभूषण तस्य श्री शोभा बभूव, गजाजिनस्य एव उपान्तभागेषु अञ्चल प्रदेशेषु रोचना एव अङ्क हंसादिचिह्न यस्य स तथोक्त दुकूलभाव पट्टांशुकत्व च बभूव, भस्मादिकमेवाङ्गरागादिभाव प्राप्तम इत्यर्थ ॥ ३२ ॥

शङ्खेति। शङ्खान्तरे ललाटास्थिमध्ये द्योतते इति तथोक्तम। 'शङ्खो निधौ ललाटास्थि' इत्यमर । अन्तर्निविष्टा मध्यगता अमला पिङ्गा तारा कनीनिका यस्य तत् तथोक्तम । 'तारकाक्ष्ण कनीनिका इत्यमर । यत विलोचन तत विलोचनम एव हरितालमय्या वर्णद्रव्यविशेषविकारस्य तिलकक्रियाया तिलकरचनाया सन्निधि एव सान्निध्य तत

सान्निध्यपक्षे हरितालमय्या
तदेव जातं तिलकक्रियाया ॥ ३३ ॥
यथाप्रदेशं भुजगेश्वराणां
करिष्यतामाभरणान्तरत्वम्।
शरीरमात्रं विकृतिं प्रपेदे
तथैव तस्थु फणरत्नशोभा१ ॥ ३४ ॥
दिवापि निष्ठ्यूतमरीचिभासा२
बाल्यादनाविष्कृतलाञ्छनेन३।
चन्द्रेण नित्यं प्रतिभिन्नमौले
चूडामणे किं ग्रहणं हरस्य ॥ ३५ ॥

एव पक्ष साध्यम 'पक्ष पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति यादव। तस्मिन सान्निध्यपक्षे जात प्रविष्टम इत्यर्थ, अनन ललाटलोचनमेव तस्य हरितालतिलकमभूदित्युक्तम ॥ ३३ ॥

यथेति। यथाप्रदेशं प्रदेशान प्रकोष्ठादीन अनतिक्रम्य आभरणान्तरत्व कङ्कणाद्याभरणविशेषत्व करिष्यता सम्पादयिष्यता भुजगेश्वराणां शरीरमात्र शरीरम एव विकृति रूपान्तर प्रपेदे फणरत्नशोभा तथा एव तस्थु, तासां तथैवोपादेयत्वात इति भाव ॥ ३४ ॥

दिवेति। दिवा दिने अपि निष्ठ्यूता उद्गीर्णा मरीचिभास किरणकान्तय यस्य तेन बाल्यात अल्पतनुत्वात अनाविष्कृतलाञ्छनेन अदृश्यमानकलङ्केन इत्यर्थ, चन्द्रेण नित्य

१ फणेषु रत्नानि तेषां शोभा।

२ निष्ठ्यूता। निपूर्वात ष्ठीवधातो कर्मणि क्त।

३ अनाविष्कृतलाञ्छनेन अनाविष्कृत लाञ्छन यस्य स तेन।

इत्यद्भुतैकप्रभव प्रभावात्
प्रसिद्धनेपथ्यविधेर्विधाता।
आत्मानमासन्नगणोपनीते
खड्गे निषक्तप्रतिमं[1] ददर्श ॥ ३६ ॥
स गोपतिं नन्दिभुजावलम्बी
शार्दूलचर्म्मान्तरितोरुपृष्ठम्।
तद्भक्तिसंक्षिप्तवृहत्प्रमाणम्
आरुह्य कैलासमिव प्रतस्थे ॥ ३७ ॥

सर्व्वदा प्रतिभिन्नमौलेः सङ्गतमुकुटस्य हरस्य चूड़ामणेः ग्रहणं स्वीकारः किं किमर्थम्। चन्द्रचूड़ामणेर्द्देवस्य किमन्यैश्चूड़ामणिभिः इति भावः ॥ ३५ ॥

इतीति। इति इत्थं प्रभावात् सामर्थ्यात् प्रसिद्धस्य नेपथ्यविधेः वेशविधानस्य विधाता निर्माता, अत एव अद्भुतानाम् आश्चर्य्याणाम् एकप्रभवः मुख्यनिधिः सः देवः आसन्नगणेन पार्श्वस्थवर्गेण प्रमथगणेन इत्यर्थः, उपनीते आनीते खड्गे निषक्तप्रतिमं सङ्क्रान्तप्रतिबिम्बम् आत्मानं ददर्श। वीरपुरुषाणामेष आचारः ॥ ३६ ॥

स इति। सः देवः नन्दिभुजावलम्बी नन्दिकेश्वरभुजावलम्बनः सन् शार्दूलचर्म्मणा व्याघ्रचर्म्मणा अन्तरितम् आच्छादितम् उरु विशालं पृष्ठं यस्य तं तथोक्तम्। 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमरः। तस्मिन् देवे भक्त्या संक्षिप्तं सङ्कोचितं वृहत् प्रमाणं यस्य तं गोपतिं वृषभं, कैलासम् इव आरुह्य प्रतस्थे चचाल ॥ ३७ ॥

---

१ निषक्ता प्रतिमा यस्य सः तम्।

तं मातरो देवमनुव्रजन्त्य.
स्ववाहनक्षोभचलावतंसाः ।
मुखैः प्रभामण्डलरेणुगौरैः
पद्माकरं चक्रुरिवान्तरीक्षम् ॥ ३८ ॥
तासाञ्च पश्चात् कनकप्रभाणां
काली कपालाभरणा चकाशे ।
वलाकिनी[1] नीलपयोदराजी
दूरं पुरःक्षिप्तशतह्रदेव ॥ ३९ ॥
ततो गणैः शूलभृतः पुरोगै
उदीरितो मङ्गलतूर्य्यघोषः ।

तमिति। तं देवम् अनुव्रजन्त्यः अनुगच्छन्त्यः स्ववाहनानां क्षोभेण प्रकम्पेन चलावतंसाः चलकुण्डलाः मातरः सप्त मातृकाः प्रभामण्डलानि एव रेणवः परागाः तैः गौरैः अरुणैः 'गौरोऽरुणे सिते पीते' इति यादवः। मुखैः अन्तरीक्षम् आकाशं पद्माकरम् इव, चक्रुः ॥ ३८ ॥

तासामिति। कनकप्रभाणां सुवर्णवर्णानां तासां मातृणां पश्चात् कपालाभरणा सितकपालालङ्कारा इत्यर्थः काली महाकाली देवी च, कृष्णवर्णत्वसूचनाय कालीसंज्ञयाभिधानम्। वलाकिनी वलाकावती। व्रीह्यादित्वादिनि। दूरं यथा तथा पुरः अग्रे क्षिप्ताः प्रसारिताः शतह्रदाः विद्युतः यस्याः सा तथोक्ता नीलपयोदराजी कालमेघपङ्क्तिः इव, चकाशे ॥ ३९ ॥

तत इति। ततः अनन्तरं शूलभृतः शिवस्य पुरः गच्छन्ति

---

१ वलाका विद्यते यस्याः सा।

विमानशृङ्गाण्यवगाहमान

शशंस सेवावसरं सुरेभ्यः ॥ ४० ॥

उपाददे तस्य सहस्ररश्मि[१]

स्त्वष्ट्रा नवं निर्मितमातपत्रम्[२]।

स तद्दुकूलादविदूरमौलि

र्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥ ४१ ॥

न्ति पुरोगे अग्रेसरे। 'अन्यत्रापि दृश्यत इति वक्तव्यम्' इति गमेर्डप्रत्ययः। गणैः प्रमथैः उदीरितः उत्पादितः मङ्गलतूर्य्यघोषः मङ्गलवाद्यध्वनिः विमानशृङ्गाणि अवगाहमानः सन् सुरेभ्यः विमानस्थेभ्यः सेवावसरं शशंस। सुराः प्रस्थानतूर्य्यध्वनिमाकर्ण्य अयमेव नः सेवावसर इत्याजग्मुः इत्यर्थः ॥४०॥

सुराणां सेवाप्रकारमेवाह, उपेति। तस्य हरस्य सहस्ररश्मिः सूर्य्यः त्वष्ट्रा विश्वकर्म्मणा निर्मितं नवम् आतपत्रम् उपाददे धृतवान् इत्यर्थः। उत्प्रेक्ष्यते, तद्दुकूलात् तस्य दुकूलात्मकातपत्रस्य प्रान्तलम्बिनः दुकूलात् अविदूरमौलिः तद्दुकूलान्यासन्नमौलिः इत्यर्थः, सः हरः उत्तमाङ्गे शिरसि। 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः। पतन्ती गङ्गा यस्य सः पतद्गङ्गः इव, बभौ। तद्दुकूलादित्यत्र 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति दूरार्थयोगे विकल्पेन पञ्चमी नाथेनोक्तम्, 'अन्यारात् इत्यत्र आराच्छब्दस्यार्थग्रहणार्थत्वात् पञ्चमीति तदनाकरम्। किञ्चास्य शास्त्रोक्तविकल्पापवादत्वात् दूरं ग्रामस्येत्यादि षष्ठीप्रयोगो दूरापास्तः स्यादित्युपचणीयमेव ॥ ४१ ॥

१ सहस्रं रश्मयः यस्य सः।

२ आतपत्रम् आतपात् त्रायते यत् तत्।

मूर्त्ते च गङ्गायमुने तदानीं
सचामरे देवमसेविषाताम् ।
समुद्रगारूपविपर्य्ययेऽपि१
सहंसपाते इव लक्ष्यमाणे ॥ ४२ ॥

तमभ्यगच्छत् प्रथमो विधाता
श्रीवत्सलक्ष्मा२ पुरुषश्च साक्षात् ।
जयेति वाचा महिमानमस्य
सम्वर्द्धयन्तौ हविषेव वह्निम् ॥ ४३ ॥

मूर्त्ते इति । गङ्गा च यमुना च गङ्गायमुने मूर्त्ते विग्रहवत्यौ सचामरे चामरसहिते सत्यौ अत एव समुद्रगा नदी तस्या रूपं स्वरूपं तस्य विपर्य्यये अपि अभावे अपि, सहंसपातेन हंससञ्चारेण सह वर्त्तेते इति सहंसपाते इव । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः, 'वोपसर्ज्जनस्य' इति समासः । लक्ष्यमाणे दृश्यमाने सत्यौ तदानीं विवाहसमये देवम् असेविषाताम् अभजताम् सेवतेर्लुङ् । गङ्गायमुने चामरग्राहिण्यौ देवमुपतस्थाते इत्यर्थः ॥ ४२ ॥

तमिति । प्रथमः आद्यः विधाता चतुर्मुखः तथा श्रीवत्सलक्ष्मा श्रीवत्साङ्कः पुरुषः विष्णुः च साक्षात् तं देवम् अभ्यगच्छत् सम्मुखम् आययौ । किं कुर्व्वन्तौ ? जयेति वाचा जयशब्देन अस्य ईश्वरस्य महिमानं महत्त्वं, हविषा वह्निम् इव सम्वर्द्धयन्तौ वृद्धिं गमयन्तौ ॥ ४३ ॥

१ समुद्रगा समुद्रं गच्छति या सा ।
२ श्रीवत्सं लक्ष्म यस्य सः ।

एकैव मूर्त्तिर्बिभिदे त्रिधा सा
सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचित्
वेधास्तयोस्तावपि धातुराद्यौ ॥ ४४ ॥
तं लोकपाला पुरुहूतमुख्या१
श्रीलक्षणोत्सर्गविनीतवेशाः ।

न चानुचितमेतदुक्तमित्याह, एकैति। सा एका एव मूर्त्तिः त्रिधा ब्रह्मविष्णुशिवात्मकत्वेन बिभिदे, औपाधिकोऽयं भेदः न वास्तविक इत्यर्थः, अत एव एषां त्रयाणां प्रथमावरयोर्भावः प्रथमावरत्वं ज्येष्ठकनिष्ठभावः सामान्यं साधारणम्। इच्छया सर्व्वे ज्येष्ठा भवन्ति कनिष्ठाश्च इत्यर्थः। एतदेव विवृणोति, कदाचित् हरः विष्णोः आद्यः कदाचित् हरिः तस्य हरस्य आद्यः कदाचित् वेधाः तयोः हरिहरयोः आद्यः कदाचित् तौ हरिहरौ अपि धातुः स्रष्टुः आद्यौ। एवमेतेषां पौर्व्वापर्य्यमनियतमिति दर्शितम् ॥ ४४ ॥

तमिति। पुरुहूतमुख्या इन्द्रादयः लोकपालाः श्रीलक्षणानाम् ऐश्वर्य्यचिह्नानां छत्रचामरवाहनानाम् उत्सर्गेण त्यागेन विनीतवेशाः अनन्नीतवेशाः सन्तः तथा दृष्टिप्रदाने दर्शननिमित्ते दर्शनप्रदानार्थम् इत्यर्थः, कृतनन्दिसञ्ज्ञाः कृता नन्दिनः प्रतीहारस्य सञ्ज्ञा सङ्केतः यैः तादृशाः मम दर्शनं दापयेति नन्दिनं प्रति कृतहस्तादिसूचनाः इत्यर्थः। 'सञ्ज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' इत्यमरः। तद्दर्शिताः तेन नन्दिना दर्शिताः अयमिन्द्रः प्रणमति अयं चन्द्रः

१ पुरुः नामासुरः हतः साऽद्रुतः येन सः पुरुहूतः इन्द्रः मुख्यः आदिः यषां ते।

इष्टिप्रदाने कृतनन्दिसञ्ज्ञा
तद्दर्शिता प्राञ्जलयः प्रणेमुः ॥ ४५ ॥
कम्पेन मूर्ध्नः शतपत्रयोनिं[1]
वाचा हरिं वृत्रहणं स्मितेन।
आलोकमात्रेण सुरानशेषान्
सम्भावयामास यथाप्रधानम् ॥ ४६ ॥
तस्मै जयाशीः ससृजे पुरस्तात्
सप्तर्षिभिस्तान् स्मितपूर्व्वमाह।
विवाहयज्ञे विततेऽत्र यूयम्
* अध्वर्य्यवः पूर्व्ववृता मयेति ॥ ४७ ॥

इत्याद्युक्तिपूर्व्वकं निवेदिताः प्राञ्जलयः कृताञ्जलयः सन्तः तं भवं प्रणेमुः प्रणताः ॥ ४५ ॥

कम्पेनेति। स देवः शतपत्रयोनिं चतुर्मुखं मूर्ध्नः कम्पेन तथा हरिं वाचा सम्भाषणेन वृत्रं हतवन्तं वृत्रहणम् इन्द्रम् 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति क्विप्। स्मितेन मन्दहासेन अशेषान् सुरान् आलोकमात्रेण दृष्टिमात्रेण इत्यं यथाप्रधानं यथार्हं सम्भावयामास ॥ ४६ ॥

तस्मा इति। तस्मै शिवाय सप्तर्षिभिः। 'दिक्संख्ये संज्ञायाम्' इति समासः। पुरस्तात् अग्रे जयेति आशीः ससृजे प्रयुक्ता। तान् सप्तर्षीन् स्मितपूर्व्वम् आह। किमिति? वितते विस्तृते अत्र प्रवर्त्तिते विवाहः एव यज्ञः तस्मिन् यूयं मया पूर्व्वम् एव वृताः प्रार्थिताः अध्वर्य्यवः ऋत्विजः इति विशेषवाचिना सामान्यमुक्तम् ॥ ४७ ॥

---

[1] शतपत्रं पद्मं योनिः यस्य सः तम्।

विश्वावसुप्राग्रहरैः[१] प्रवीणैः
सङ्गीयमानत्रिपुरावदानः।
अध्वानमध्वान्तविकारलङ्घ्य-
स्ततार ताराधिपखण्डधारी[२] ॥ ४८ ॥
खे खेलगामी तमुवाह वाहः
सशब्दचामीकरकिङ्किणीकः।

विश्वावस्विति। विश्वावसुः नाम कश्चित् गन्धर्व्वः देवगायकः तत्प्राग्रहरैः तत्प्रमुखैः प्रवीणैः प्रकृष्टवीणैः निपुणैः वा। 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' इत्यमरः। त्रयाणां पुराणां समाहारः त्रिपुरम्। 'तद्धितार्थोत्तरपदे' इत्यादिना समाहार-समासः। पात्रादिभ्यः प्रतिषेधो वक्तव्यः स नपुंसकम् इति स्त्रीलिङ्गान्ततानिषेधः। त्रिपुरस्य सम्बन्धि अवदानं पूर्व्ववृत्तं कर्म्म विजयरूपं त्रिपुरावदानं तत् सङ्गीयमानं स्तूयमानं यस्य स तथोक्तः 'अवदानं कर्म्म वृत्तम्' इत्यमरः। ध्वान्तं तमः मोह इति यावत् तद्विकारेण रागादिना लङ्घ्यः अभिभवनीयः न भवति इति अध्वान्तविकारलङ्घ्यः, विवाहादिकन्तु तस्य लीला इत्यर्थः ताराधिपखण्डधारी चन्द्रशेखरः शम्भुः अध्वानं मार्गं ततार अत्यगच्छत्॥ ४८ ॥

खे इति। खे आकाशे खेलं सुन्दरं गच्छति इति खेल-गामी सशब्दाः शब्दायमानाः चामीकरकिङ्किण्यः काञ्चनक्षुद्र-घण्टिकाः यस्य स तथोक्तः। 'किङ्किणी क्षुद्रघण्टिका' इत्यमरः। 'नद्यृतश्च' इति कप्। वाह्यते अनेन इति वाहः वृषभः। करणे घञ्। प्रोतघने स्यूतमेघे अत एव तटाभिघातात् रोधोभेदात्

१ विश्वावसुः प्राग्रहरः प्रमुखः येषां ते तैः।
२ ताराधिपस्य खण्डं धरति यः सः।

तटाभिघातादिव लग्नपङ्के
धुन्वन् मुहुः प्रोतघने[1] विषाणे ॥ ४९ ॥
स प्रापदप्राप्तपराभियोगं
नगेन्द्रगुप्तं नगरं मुहूर्त्तात् ।
पुरो विलग्नैर्हरदृष्टिपातैः
सुवर्णसूत्रैरिव कृष्यमाणः ॥ ५० ॥
तस्योपकण्ठे घननीलकण्ठः
कुतूहलादुन्मुखपौरदृष्टः ।
स्वबाणचिह्नादवतीर्य्य[2] मार्गात्
आसन्नभूपृष्ठमियाय देवः ॥ ५१ ॥ ×

लग्नपङ्के श्लिष्टकर्द्दमे इव स्थिते विषाणे शृङ्गे मुहुः धुन्वन् तं हरम् उवाह वहति स्म ॥ ४९ ॥

स इति । स वाहः नप्राप्त पराभियोगः शत्रुसमाक्रान्तिः यस्य तत् तथोक्तं नगेन्द्रेण हिमवता गुप्तं रक्षितं नगरम् ओषधिप्रस्थं पुरः अग्रे विलग्नैः सङ्क्रान्तैः हरदृष्टिपातैः सुवर्णसूत्रैः कृष्यमाण इव मुहूर्त्तात् प्रापत अन्यथा कथं दूरस्याशु प्राप्तिः स्यात् इति भावः । पुरः प्रसृता हरदृष्टयः पिङ्गलवर्णत्वात् सौवर्णानि दृष्याकर्षणदामानीव अलक्ष्यन्त इत्यर्थः ॥ ५० ॥

तस्येति । तस्य पुरस्य उपकण्ठे अन्तिके घनः मेघ इव नीलः कण्ठः यस्य सः घननीलकण्ठः देवः कुतूहलात् दर्शनौत्सुक्यात् उन्मुखैः पौरैः दृष्टः सन् स्वबाणचिह्नात् त्रिपुर

१ प्रोत । प्रपातः वधातो क्तः ।

२ स्वबाणचिह्नात् स्वबाणस्य चिह्नं यस्मिन् स तस्मात् ।

तम्‌ऋद्धिमद्बन्धुजनाधिरूढै
वृन्दैर्गजानां गिरिचक्रवर्त्ती१।
प्रत्युज्जगामागमनप्रतीत
प्रफुल्लवृक्ष कटकैरिव स्वै॥ ५२॥

वर्गावुभौ देवमहीधराणा
द्वारे पुरस्योद्घटितापिधाने२।
समीयतुर्दूरविसर्पिघोषौ३
भिन्नैकसेतू पयसामिवौघौ॥ ५३॥

विजयसमये स्ववाणाद्‌ध्वात मार्गात् कुतश्चित् आकाशदेशात अत्र तौर्थ्य अवरुह्य आसन्नभूपृष्ठ निकटभूतलम् इयाय प्राप॥५१॥

तमिति। आगमनेन शिवागमनेन प्रतीत हृष्ट गिरिचक्रवर्त्ती पर्व्वताधिराज हिमवान ऋद्धिमता वस्त्रालङ्कारादिसमृद्धेन बन्धुजनेन अधिरूढै, अनेन बन्धुना समस्वाम्य सूचितम। गजाना वृन्दै प्रफुल्ला विकसितकुसुमा वृक्षा येषु तै, स्वै स्वकीयै कटकै नितम्बै इव, त हर प्रत्युज्जगाम अभिययौ। 'कटकोऽस्त्री नितम्बोऽद्रे' इत्यमर॥ ५२॥

वर्गाविति। दूरविसर्पी दूरगामी घोष ययो तौ देवाश्च महीधराश्च तेषा देवमहीधराणाम उभौ वर्गौ उद्घटितापिधाने अपनीतकवाटे पुरस्य द्वारे भिन्न दीर्ण एकसेतु याभ्या तौ भिन्नैकसेतू पयसाम ओघौ प्रवाहौ इव, समीयतु सङ्गतौ॥ ५३॥

१ गिरीणा चक्रवर्त्ती।

२ उद्घटितापिधाने उद्घटितम अपिधान यस्य तत तस्मिन।

३ दूरविसर्पी दूर विसर्पति य स।

ह्रीमानभूद् भूमिधरो हरेण
त्रैलोक्यवन्द्येन कृतप्रणामः ।
पूर्व्वं महिम्ना स हि तस्य दूरम्
आवर्ज्जितं नात्मशिरो विवेद ॥ ५४ ॥
स प्रीतियोगाद्विकसन्मुखश्री
जामातुरग्रेसरतामुपेत्य१ ।

ह्रीमानिति। भूमिधरः हिमवान् त्रयः लोकाः त्रैलोक्यम् चातुर्वर्ण्यादित्वात् ष्यञ्प्रत्ययः । तस्य वन्द्येन नमस्कार्य्येण हरेण कृतप्रणामः सन् । 'ऋत्विक्पितृश्वशुरमातुलानां यवीयसाम् । प्रवयाः प्रथमं कुर्य्यात् प्रत्युत्थायाभिवादनम् ॥' इति स्मरणात् । ह्रीमान् अभूत् महादेवं प्रति स्वयमल्पत्वात् सङ्कोचं प्राप इत्यर्थः । ननु विदितेश्वरमहिम्नः स्वयं प्रागेव प्रणतस्य जामातुराचारमात्रस्वीकारे कः सङ्कोचः इति शङ्कां निरस्यति पूर्व्वमिति। हि यस्मात् सः हिमवान् पूर्व्वं प्राक् एव तस्य ईश्वरस्य महिम्ना सामर्थ्येन दूरम् अत्यन्तम् आवर्ज्जितं नमितम् आत्मशिरः न विवेद सत्यं स्वयं प्रणतत्वानुसन्धाने न सङ्कोचः तदनुसन्धानन्तु औतसुक्यान्नास्ति इति भावः ॥ ५४ ॥

स इति। प्रीतियोगात् सन्तोषसम्बन्धात् विकसन्मुखश्रीः विकसन्ती मुखश्रीः यस्य सः तथोक्तः सः हिमवान् जायां मिमीते जानाति इति जामाता वरस्य। पृषोदरादित्वात् साधुः । 'जामाता दुहितुः पतिः' इत्यमरः । अग्रेसरतां पुरोगामित्वम् उपेत्य एनं देवम् आगुल्फं पादग्रन्थिपर्य्यन्तं कीर्णानि पर्य्यस्तानि आपणमार्गेषु पण्यवीथिकासु पुष्पाणि यस्मिन् तत्

१ अग्रेसरताम् अग्रे सरति यः सः तस्य भावः ताम् ।

प्रावेशयन्मन्दिरमृद्धमेनम्
आगुल्फकीर्णापणमार्गपुष्पम् ॥ ५५ ॥
तस्मिन् मुहूर्त्ते पुरसुन्दरीणाम्
ईशानसन्दर्शनलालसानाम्।
प्रासादमालासु बभूवुरित्थं
त्यक्तान्यकार्य्याणि[१] विचेष्टितानि ॥ ५६ ॥
आलोकमार्गं सहसा व्रजन्त्या
कयाचिदुद्वेष्टनवान्तमाल्यः।

आगुल्फकीर्णापणमार्गपुष्पम। तद्ग्रन्थी घुटिके गुल्फौ इत्य मर'। ऋद्ध समृद्ध मन्दिर नगरम 'मन्दिर नगरेऽगारे मन्दिरो मकरालये' इति विश्व। प्रावेशयत् ॥ ५५ ॥

तस्मिन्निति। तस्मिन मुहूर्त्ते हरपुरप्रवेशसमये ईशानस्य सन्दर्शने लालसाना लोलुपानाम। 'लोलुपो लोलुभो लोलो लालसो लम्पटश्च स' इति यादव। पुरसुन्दरीणा प्रासाद मालासु इत्थ वक्ष्यमाणप्रकारेण त्यक्तान्यकार्य्याणि विसृष्ट कार्य्यान्तराणि विचेष्टितानि व्यापारा। 'नपुसके भावे क्त' इति क्त। बभूवु आसन ॥ ५६ ॥

तान्येवाह पञ्चभि श्लोकै, आलोकेति। आलोकमार्ग दर्शनपथ गवाक्षम इत्यर्थ, सहसा व्रजन्त्या गच्छन्त्या कयाचित उद्वेष्टन द्रुतगतिवशात उन्मुक्तबन्धन अत एव वान्तमाल्य उद्गीर्णमाल्यश्च य स उद्वेष्टनवान्तमाल्य करेण रुद्ध गृहीत अपि च केशपाश केशकलाप। पाश पक्षश्च हस्तश्च कला पार्थ्या कचात्परे' इत्यमर। तावत आलोकनमार्गप्राप्ति

१ त्यक्तानि अन्यकार्य्याणि येन तानि।

बन्धुं न सम्भावित एव तावत्
करेण रुद्धोऽपि च केशपाशः ॥ ५७ ॥

प्रसाधिकालम्बितमग्रपादम्
आक्षिप्य काचित् द्रवरागमेव ।
उत्सृष्टलीलागतिरा[१] गवाक्षात्
अलक्तकाङ्का पदवीं ततान ॥ ५८ ॥

विलोचनं दक्षिणमञ्जनेन
सम्भाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसन्निकर्षं
ययौ शलाकामपरा वहन्ती ॥ ५९ ॥

पर्य्यन्तं बन्धुं बद्धुनाय इत्यर्थः न सम्भावित न स्मृत एव ॥ ५७ ॥

प्रसाधिकेति। काचित् स्त्री प्रसाधिकया अलङ्कर्त्र्या आलम्बितं रञ्जनार्थं धृतं द्रवरागम् एव आर्द्रालक्तकम् एव अग्रश्च असौ पादश्च अग्रपाद इति समानाधिकरणसमासः। 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्' इति वामनः। तम् आक्षिप्य आकृष्य उत्सृष्टलीलागतिः त्यक्तमन्दगमना सती आ गवाक्षात् गवाक्षपर्य्यन्तं, पदद्वयमेतत्। पदवीम् अलक्तकाङ्काम् लाक्षारसचिह्नां चकार ॥ ५८ ॥

विलोचनमिति। अपरा स्त्री दक्षिणं विलोचनम् अञ्जनेन सम्भाव्य अलङ्कृत्य तद्वञ्चितं तेन अञ्जनेन वञ्चितं वामनेत्रं यस्याः सा तथोक्ता सती तथा एव तेन एव रूपेण शलाकाम् अञ्जनकूर्च्चिकां वहन्ती बिभ्रती वातायनसन्निकर्षं गवाक्ष-

१ उत्सृष्टलीलागति उत्सृष्टा लीलया गति यया सा।

जालान्तरप्रेषितदृष्टिरन्या१
प्रस्थानभिन्नां न बबन्ध नीवीम्।
नाभिप्रविष्टाभरणप्रभेण
हस्तेन तस्थाववलम्ब्य वासः ॥ ६० ॥

अर्द्धाचिता सत्वरमुत्थितायाः
पदे पदे दुर्निमिते गलन्ती।
कस्याश्चिदासीद्रशना तदानीम्
अङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ६१ ॥

समीपं ययौ। दक्षिणग्रहणं सम्भ्रमात् व्युत्क्रमद्योतनार्थम् 'सव्यं हि पूर्वं मनुष्या अञ्जते' इति श्रुतेः ॥ ५९ ॥

जालान्तरेति। अन्या स्त्री जालान्तरप्रेषितदृष्टिः गवाक्षमध्यप्रसारितदृष्टिः सती प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वस्त्रग्रन्थिम् 'नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि' इति विश्वः। न बबन्ध नाबध्नात्। किन्तु नाभिं प्रविष्टा आभरणानां किङ्किणीनां प्रभा यस्य तेन प्रभैव नाभेरावरणमभूत् इति भावः। हस्तेन वासः अवलम्ब्य धृत्वा तस्थौ ॥ ६० ॥

अर्द्धेति। सत्वरं सवेगम् उत्थितायाः कस्याश्चित् अर्द्धम् आचिता मणिभिः गुम्फिता अर्द्धाचिता दुर्निमिते सम्भ्रमात् दुःखेन निक्षिप्ते। डु मिञ् प्रक्षेपणे इति धातोः कर्म्मणि क्तः। पदे पदे प्रतिपदम्। वीप्सायां द्विभावः। गलन्ती गलद्रत्ना रशना मेखला तदानीं तस्मिन् अवसरे अङ्गुष्ठमूले अर्पितं गलितं सूत्रम् एव शेषः यस्याः सा आसीत् ॥ ६१ ॥

१ जालान्तरप्रेषितदृष्टिः जालान्तरे प्रेषिता दृष्टिः यया सा

तासां मुखैरासवगन्धगर्भै-
 र्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः
 सहस्रपत्राभरणा१ इवासन् ॥ ६२ ॥
तावत् पताकाकुलमिन्दुमौलि-
 रुत्तोरणं राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवापि कुर्व्वन्
 ज्योत्स्नाभिषेकद्विगुणद्युतीनि ॥ ६३ ॥
तमेकदृश्यं नयनैः पिबन्त्यो
 नार्य्यो न जग्मुर्विषयान्तराणि ।

तासामिति । तदानीं सान्द्रकुतूहलानां तासां स्त्रीणाम् आसवगन्धगर्भैः यथा ते विलोलानि नेत्राणि एव भ्रमराः येषु तैः मुखैः व्याप्तान्तराः छन्नावकाशाः गवाक्षाः सहस्रपत्राभरणा इव आसन्, कमलालङ्कृता इव स्थिता इत्यर्थः ॥ ६२ ॥

तावदिति । तावत् तस्मिन् अवसरे इन्दुमौलिः ईश्वरः दिवा अपि प्रासादशृङ्गाणि ज्योत्स्नया अभिषेकेण स्नपनेन द्विगुणद्युतीनि द्विरावृत्तकान्तीनि । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती । कुर्व्वन् पताकाभिः आकुलम् आकीर्णम् उत्तोरणम् उच्छ्रिततोरणं राजपथं प्रपेदे ॥ ६३ ॥

तमिति । एक एव दृश्यः दर्शनीयः तम् एकदृश्यं तम् ईश्वरं नयनैः पिबन्त्यः अतितृष्णया पश्यन्त्यः इत्यर्थः 'ताः शङ्करं दृष्टिभिरापिबन्त्यः' इति वा पाठः । नार्य्यः विषयान्तराणि

१ सहस्रपत्राणि आभरणानि येषां ते ।

तथाहि शेषेन्द्रियवृत्तिरासां
　　सर्व्वात्मना चक्षुरिव प्रविष्टा ॥ ६४ ॥
स्थाने तपो दुश्चरमेतदर्थम्
　　अपर्णया पेलवयापि तप्तम्।
या दास्यमप्यस्य लभेत नारी
　　सा स्यात् कृतार्था किमुताङ्कशय्याम् ॥ ६५ ॥
परस्परेण स्पृहणीयशोभं
　　न चेदिदं द्वन्द्वमयोजयिष्यत ।

नन अयान विषयान शब्दादीन इत्यर्थः न जग्मुः न विविदुः इत्यर्थः । तथाहि, आसां नारीणां शेषेन्द्रियवृत्तिः श्रोत्रादिप्रवृत्तिः सर्व्वात्मना स्वरूपकार्त्स्न्येन चक्षुः प्रविष्टा इव श्रोत्रादीनि इन्द्रियाणि स्वातन्त्र्यात् ग्रहणाशक्तेश्चक्षुरेव प्रविश्य नीतं कृतं स्वयमप्येनमुपलभन्ते किम्? अन्यथा स्वस्वविषयाधिगमः किं न स्यात् इति भावः ॥ ६४ ॥

अथ पौराङ्गनावचनान्याह स्थाने इति । पेलवया कोमलया अपि अपर्णया पार्व्वत्या एतस्मै शिवाय इदम् एतदर्थम् । 'अर्थेन सह नित्यसमासः सर्व्वलिङ्गता च' इति विशेष्यनिघ्नत्वम्। दुश्चरं तपः तप्तं स्थाने युक्तम् । कुतः? या नारी अस्य ईश्वरस्य दास्यं दासीत्वम् अपि लभेत सा कृतार्था स्यात् । या अङ्कः एव शय्या ताम् अङ्कशय्यां लभेत सा किमुत? कृतार्थेति किमु वक्तव्यम्, इत्यर्थः ॥ ६५ ॥

परस्परेणेति। स्पृहणीयशोभं* सर्व्वैः आशास्यमानसौन्दर्यम् इदं द्वन्द्वं मिथुनम् 'द्वन्द्वं रहस्य' इत्यादिना निपातः । पर

---

* स्पृहणीया शोभा यस्य तत् ।

अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां विफलोऽभविष्यत् ॥ ६६ ॥
न नूनमारूढरुषा१ शरीरम्
अनेन दग्धं कुसुमायुधस्य ।
व्रीडादमुं देवमुदीक्ष्य मन्ये
सन्न्यस्तदेहः स्वयमेव कामः ॥ ६७ ॥
अनेन सम्बन्धमुपेत्य दिष्ट्या
मनोरथप्रार्थितमीश्वरेण ।

...रेण न अयोजयिष्यत् न योजयेत यदि प्रजानां पत्युः विधातुः अस्मिन् द्वये द्वन्द्वे रूपविधाने सौन्दर्य्यनिर्माणे यत्नः प्रयासः विफलः अभविष्यत् भवेत । एतदनुरूपस्त्रीपुंसान्तराभावात् इति भावः 'लिङ् निमित्ते लङ् क्रियातिपत्तौ' इति लङ् ॥ ६६ ॥

नेति । आरूढरुषा प्ररूढकोपेन हरेण कुसुमायुधस्य कामस्य शरीरं न दग्धं नूनं किन्तु कामः अमुं देवम् उदीक्ष्य दृष्ट्वा व्रीडात् सौन्दर्य्येण जितोऽस्मि इति लज्जया स्वयमेव सन्न्यस्तदेहः त्यक्तदेहः इति मन्ये, इत्युत्प्रेक्षा । नास्या आकृतेः कोपः सम्भवति इति भावः ॥ ६७ ॥

काचित्काञ्चिदाह, अनेनेति । हे आलि ! सखि ! 'आली सखी वयस्या च' इत्यमरः । शैलराजः हिमवान् दिष्ट्या इति आनन्देऽव्ययम्, मनोरथे प्रार्थितम् अवरुद्धम् अभिलाषविषयीकृतम् इत्यर्थः । 'प्रार्थना याचनावरोधयोः' इति अभिधानात् । अनेन ईश्वरेण सम्बन्धम् उपेत्य अवाप्य क्षितिधारणेन उच्चम् उन्नतं मूर्द्धानम् उच्चैस्तरम् उन्नततरम् । उच्चैरित्यव्ययात्

१ आरूढरुषा आरूढा रुट् येन स तेन ।

मूर्द्धानमालि क्षितिधारणोच्चम्
उच्चैस्तरं वक्ष्यति शैलराजः ॥ ६८ ॥
इत्योषधिप्रस्थविलासिनीनां
शृण्वन् कथाः श्रोत्रसुखास्त्रिनेत्रः१ ।
केयूरचूर्णीकृतलाजमुष्टिं
हिमालयस्यालयमाससाद ॥ ६९ ॥
तत्रावतीर्य्याच्युतदत्तहस्तः
शरद्घनाद्दीधितिमानिवोक्ष्णः ।

तरप्प्रत्ययः । मूर्धा द्रव्यत्वात् नामुप्रत्ययान्तो निपातः 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यादिना अद्रव्यप्रकर्षे तस्य विधानादिति । वक्ष्यति धारयिष्यति । वहतेर्लृट् ॥ ६८ ॥

इतीति । त्रिनेत्रः त्र्यम्बकः त्रिनेत्रत्रिनयनशब्दयोः 'क्षुभ्नादिषु च' इति णत्वाभावः । इति इत्थम् ओषधिप्रस्थविलासिनीनां सम्बन्धिनीः श्रोत्रसुखाः श्रवणमधुराः कथाः आलापान् शृण्वन् केयूरैः अङ्गदैः चूर्णीकृताः लाजानां मुष्टयः यस्मिन् तं तथोक्तम् । तत्रावकीर्णाः आचारलाजाः अन्तराले एवाङ्गदैः चूर्णीभूय पिष्यन्ते इति पुरन्ध्रिजनसम्बन्धातिशयोक्तिः । हिमालयस्य हिमवतः आलयं भवनम् आससाद ॥ ६९ ॥

तत्रेति । तत्र हिमवदालये अच्युतेन विष्णुना दत्तहस्तः वितीर्णहस्तावलम्बः सन्, शरद्घनात् शरन्मेघात्, शरद्विशेषणात् मेघस्य शुभ्रत्वं गम्यते । दीधितिमान् सूर्य्य इव, उक्ष्णः वृषात् अवतीर्य्य कमलासनेन पूर्वम् अग्रे क्रान्तानि प्रविष्टानि अन्ति

१ श्रोत्रसुखाः श्रोत्रं सुखयन्ति याः ताः ।

क्रान्तानि पूर्व्वं कमलासनेन
कक्ष्यान्तराण्यद्रिपतेर्व्विवेश ॥ ७० ॥

तमन्वगिन्द्रप्रमुखाश्च देवा
सप्तर्षिपूर्व्वाः परमर्षयश्च।
गणाश्च गिर्य्यालयमभ्यगच्छन्
प्रशस्तमारम्भमिवोत्तमार्थाः ॥ ७१ ॥

तत्रेश्वरो विष्टरभाग् यथावत्
सरत्नमर्घ्यं मधुमच्च गव्यम्।

पत कक्ष्यान्तराणि गेहप्रकोष्ठान्तराणि विवेश। 'कक्ष्या कच्छे द्विवाया काञ्च्यां गेहप्रकोष्ठके' इति यादव ॥ ७० ॥

तमिति। तम ईश्वरम् अन्वक अनुपदम। अव्ययमेतत 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमर। इन्द्रप्रमुखा देवाश्च सप्त ऋषय पूर्व्वे येषा ते सप्तर्षिपूर्व्वा। 'न बहुव्रीहौ' इति सर्व्वनामसञ्ज्ञाप्रतिषेध। परमर्षय सनकादिमहर्षयश्च सन्महत्परमोत्तमोत्कृष्टा पूज्यमानै इति तत्पुरुष। गणा प्रमथाश्च, उत्तमार्थाः महाप्रयोजनानि प्रशस्त प्रकृष्टममोघमित्यर्थ। आरभ्यते इति आरम्भ उपाय तम इव, गिर्य्यालय हिमवन्मन्दिरम् अभ्यगच्छन् प्राविशन इत्यर्थ ॥ ७१ ॥

तत्रेति। तत्र हिमवदालये ईश्वर विष्टरभाक आसनगत उपविष्ट इत्यर्थ यथावत यथार्ह विधिवत् इत्यर्थ सरत्न रत्नसहितम् अर्घ्यम अर्घार्थजल, मधु क्षौद्रम् अस्मिन् अस्ति इति मधुमत् गवि भव गव्य दधि च मधुपर्कम् इत्यर्थ। दधिमधनी सर्पिर्म्मध्वलाभे' इति आश्वलायनगृह्यसूत्रात्। नवे

विष्टरभाक् विष्टर भजते य स।

नवे दुकूले च नगोपनीत
प्रत्यग्रहीत् सर्व्वममन्त्रवर्ज्जम् ॥ ७२ ॥
दुकूलवासा १ स वधूसमीप
निन्ये विनीतैरवरोधदक्षैः ।
वेलासमीप स्फटफेनराजि
नवैरुदन्वानिव चन्द्रपादैः ॥ ७३ ॥
तया प्रवृद्धाननचन्द्रकान्त्या
प्रफुल्लचक्षु कुमुद कुमार्य्या ।

दुकूले च इति सर्व्व नगोपनीत हिमवदानीतम् अर्घ्यादिक मन्त्रान वर्ज्जयित्वा मन्त्रवर्ज्ज, ततो नञ्समास, अमन्त्रवर्ज्ज मन्त्रान न वर्ज्जयित्वा इत्यर्थ । 'द्वितीयायाञ्च इति णमुल प्रत्यय इत्याह न्यासकार अनदात्त पदमेकवर्ज्जमित्यत्र प्रत्यग्रहीत स्वीकृतवान ॥ ७२ ॥

दुकूलेति । अथ दुकूलवासा दुकूल वसान इत्यर्थ स हर विनीते अनद्धते अवरोधेषु ये दक्षा तै अवरोधदक्षै वधूसमीप निन्ये नीत । कथमिव ? स्फटा फेनाना राजि यस्य स, उदकम् अस्य अस्ति इति उदन्वान समद्र । 'उदन्वानुदधौ च' इति निपातनात् साधु । नवे अचिरोदितै चन्द्रपादै चन्द्रकिरणै वेलासमीपम इव ॥ ७३ ॥

तयेति आनन चन्द्र इव इति उपमितिसमास, प्रवृद्धा आननचन्द्रस्य कान्ति यस्या तया तथोक्तया तया कुमार्य्या प्रवृद्धालोक इव, ससृज्यमान सङ्गच्छमान शिव चक्षूंषि कुमदानि इव तानि प्रफुल्लानि यस्य स तथोक्त चेत सलिलम

१ दुकूल वास यस्य स ।

प्रसन्नचेत सलिल शिवोऽभूत
संसृज्यमान शरदेव लोक ॥ ७४ ॥
तयो समापत्तिषु कातराणि
किञ्चिद्व्यवस्थापितसंहृतानि ।
ह्रीयन्त्रणा तत्क्षणमन्वभूवन
अन्योन्यलोलानि विलोचनानि ॥ ७५ ॥
तस्या कर शैलगुरूपनीत
जग्राह ताम्राङ्गुलिमष्टमूर्त्ति ।
उमातनौ गूढतनो १ स्मरस्य
तच्छङ्किन पूर्व्वमिव प्ररोहम ॥ ७६ ॥

[illegible] तत् प्रसन्न यस्य स त[illegible] प्रसन्नचेत सलिल [illegible] त[illegible] [illegible]कोऽयमपि यथोचित विशेषणानि योज्यानि ॥ ७४ ॥

तयोरिति। तयं वधूवरयो समापत्तिषु य[illegible] [illegible]गतिषु कातराणि चकितानि। अधीरे कातर इत्यमर। [illegible]मसमर्थानि इति भाव। किञ्चित ईषत् व्यवस्थापितानि [illegible]तानि पश्चात् संहृतानि निवर्त्तितानि च इति व्यव[illegible]संहृतानि। 'पूर्व्वकाल' इत्यादिना तत्पुरुष। अन्यो[illegible] [illegible]लोलानि सतृष्णानि। लोलश्चलसतृष्णयो [illegible] [illegible] [illegible]चनानि दृष्टय तत्क्षण तस्मिन क्षणे ह्रीयन्त्रणा स्त्रिया [illegible]नित्त। संकोचम अन्वभूवन ॥ ७५ ॥

तस्या इति। अष्टमूर्त्ति शिव तस्मात् [illegible] [illegible] [illegible]ना। तच्छङ्किन तद्भीतस्य इत्यर्थ अत एव, उमातनौ उमा[illegible] [illegible]रीर गूढतनो गूढशरीरस्य स्मरस्य पूर्व्व प्ररोहम् इव

१ गूढा तनु यस्य स तस्य।

सान्निध्ययोगादनयोस्तदानीं१
किं कथ्यते श्रीरुभयस्य तस्य ॥ ७८ ॥
प्रदक्षिणप्रक्रमणात् कृशानो
उदर्च्चिषस्तन्मिथुनं२ चकाशे ।
मेरोरुपान्तेष्विव वर्त्तमानम्
अन्योन्यसंसक्तमहस्त्रियामम् ॥ ७९ ॥
तौ दम्पती३ त्रिः परिणीयवह्निम्
अन्योन्यसंस्पर्शनिमीलिताक्षौ ।

अस्य तत तथोक्तम अन्यत् लौकिकं वध्वाश्च वरस्य च वधूवरं। समा
हार इत्येकवद्भाव । तदानीं पाणिग्रहणकाले अनयो उमा
शिवयो सान्निध्ययोगात सन्निधिभावात अग्र्याम उत्तमा कान्ति
शोभा पर्य्याप्ति पर्य्याप्ति तस्य उभयस्य उमामहेश्वररूपस्य मिथु
नस्य श्री किं कथ्यते यत्प्रसादादन्यस्य शोभालाभ तस्य शोभा
वक्तव्या इत्यर्थ । विवाहसमये गौरीशिवौ वधूवरावनुप्रविश्य
नाम इत्यागम ॥ ७८ ॥

प्रदक्षिणेति। तत् मिथुनम उदर्च्चिष उन्नतज्वालस्य
कृशानो कर्म्मणि प्रदक्षिणप्रक्रमणात प्रदक्षिणीकरणात् चकाशे
शुशुभे इव मेरो उपान्तेषु परिसरेषु वर्त्तमानम आवर्त्तमान
मेरु प्रदक्षिणीकुर्व्वत् इत्यर्थ अन्योन्येन समसक्त सङ्गत, मिथुन
स्याप्येतद विशेषणम । अहश्च त्रियामा च अहस्त्रियाम रात्रि
दिवम इव। समाहारे इत्येकवद्भाव ॥ ७९ ॥

ताविति। स परस्तात् एव हित विधत्ते इति परोधा

१ सान्निध्ययोगात् सन्निधि एव सान्निध्य तस्य योग तस्मात् ।
उदाच्चिष उन्नता अर्च्चिष यस्य स तस्य ।

२ जाया च पतिश्च तौ ।

स कारयामास बधू पुरोधा
　　तस्मिन समिद्धार्चिषि लाजमोक्षम ॥ ८० ॥
सा लाजधूमाञ्जलिमिष्टगन्ध
　　गुरूपदेशाद्वदन निनाय ।
कपोलसंसर्पिशिख स तस्या
　　मुहूर्त्तकर्णोत्पलता प्रपेदे ॥ ८१ ॥
तदीषदार्द्रारूणगण्डलेखम्
　　उच्छ्वासिकालाञ्जनरागमक्ष्णो ।

पुरोहित' अन्योन्यस्य सस्पर्शेन स्पर्शसुखेन निमीलिताक्षौ तौ जाया च पतिश्च दम्पती कर्म्मभूतौ, जायाशब्दस्य दम्भाव। निपातित । वह्निं त्रिवारम । 'द्वित्रिचतुर्भ्य सुच इति सुच परिणायनरित नीत्वा प्रदक्षिणीकार्य इत्यर्थ । नयतेर्द्विकर्म्म कात ल्यप् । समिद्धार्चिषि दीप्तज्वाले तस्मिन वह्नौ बधू लाजमोक्ष लाजविसर्ग कारयामास । 'हृक्रोरन्यतरस्याम इति विकल्पाद्णिकर्त्तु कर्म्मत्वम ॥ ८० ॥

सेति । सा बधू गुरो पुरोधस उपदेशात इष्ट घ्राणतर्पण इत्यर्थ गन्ध यस्य त लाजधूमाञ्जलि वदन निनाय । कपोलसंसर्पिणी शिखा यस्य स तथोक्त स धूम तस्या गौर्य्या मुहूर्त्तकर्णोत्पलता प्रपेदे । धूमस्य विसृमरत्वान्मुहूर्त्तग्रहणम् ॥ ८१ ॥

तदिति । तत् बधूमुखम् आचारधूमग्रहणात आचारप्राप्तधूमत्वात् ईषत आर्द्रं स्विन्नं अरुणं च गण्डलेखे गण्डस्थले यस्य तत् तथोक्तम् अक्ष्णो उच्छ्वासी उद्गच्छन कालाञ्जनस्य राग रञ्जन यस्य तत तथोक्त क्लान्त यवाङ्कुरकर्ण

वधूमुखं क्रान्तयवावतंसम्

आचारधूमग्रहणाद् बभूव ॥ ८२ ॥

वधूं द्विजः प्राह तवैष वत्से

वह्निर्विवाहं प्रति कर्म्मसाक्षी।

शिवेन भर्त्रा सह धर्म्मचर्य्या

कार्य्या त्वया मुक्तविचारयेति१ ॥ ८३ ॥

आलोचनान्तं श्रवणे वितत्य

पीतं गुरोस्तद्वचनं भवान्या।

निदाघकालोल्वणतापयेव

माहेन्द्रमम्भः प्रथमं पृथिव्या ॥ ८४ ॥

पर यस्य तत् तथाभूतं बभूव। लाजाञ्जलिं विसृज्य धूमाग्रं जिघ्रेत्' इति प्रयोगवृत्तिकारः ॥ ८२ ॥

वधूमिति। अथ वधूं द्विजः पुरोधाः प्राह। किमिति ? हे वत्से। एष वह्निः तव विवाहं प्रति विवाहकर्म्मणि इत्यर्थः कर्म्मसाक्षी कर्म्मद्रष्टा, भर्त्रा शिवेन सह मुक्तविचारया निर्विचारया त्वया धर्म्मचर्य्या धर्म्माचरणं कार्य्या कर्त्तव्या इति। अयञ्च प्राजापत्यविवाहो द्रष्टव्यः। यथाह आश्वलायनः 'सह धर्म्मञ्चरेदिति प्राजापत्यः' इति ॥ ८३ ॥

आलोचनान्तमिति। भवस्य पत्न्या भवान्या 'इन्द्रवरुण भवशर्व्वरुद्र' इत्यादिना ङीप् आनगागमश्च। आलोचनान्तं नेत्रान्तपर्य्यन्तम्। 'आङ्मर्य्यादाभिविध्योः' इति अव्ययीभावः। श्रवणे श्रोत्रे वितत्य विस्तार्य्य तत् पूर्व्वोक्तं गुरोः याज्ञिकस्य

१ मुक्तविचारया मुक्तः विचारः यया सा तया।

ध्रुवेण भर्त्रा ध्रुवदर्शनाय
प्रयुज्यमाना प्रियदर्शनेन।
सा दृष्ट इत्याननमुन्नमय्य
ह्रीसन्नकण्ठी कथमप्युवाच ॥ ८५ ॥
इत्थं विधिज्ञेन पुरोहितेन
प्रयुक्तपाणिग्रहणोपचारौ¹।
प्रणेमतुस्तौ पितरौ प्रजानां
पद्मासनस्थाय पितामहाय ॥ ८६ ॥

धर्म्म सह धर्म्मं चर इति वाक्य, निदाघकाले ग्रीष्मकाले उष्णतपया उत्कटसन्तापया पृथिव्या प्रथमम् आद्य माहेन्द्र पाकं नूतनम् अम्भ इव, पीतम् अत्यादरेण शुश्राव इत्यर्थः ॥ ८४ ॥

ध्रुवेणेति। प्रियं दर्शनं यस्य कर्म्मभूतस्य तेन प्रियदर्शनेन ध्रुवेण शाश्वतेन भर्त्रा ध्रुवस्य नक्षत्रविशेषस्य दर्शनाय। 'ध्रुवो भभेदे क्लीवन्तु निश्चिते शाश्वते त्रिषु' इत्यमरः। प्रयुज्यमाना दृश्यतामिति प्रेर्यमाणा ह्रीसन्नकण्ठी ह्रीया लीनस्वरा सा वधू कथम् अपि आननम् उन्नमय्य दृष्ट इति उवाच ॥ ८५ ॥

इत्थमिति। इत्थम् अनेन प्रकारेण। इदमस्थम् इति थमप्रत्ययः। विधिज्ञेन विवाहप्रयोगज्ञेन शास्त्रज्ञेन इत्यर्थः पुरोहितेन हैमवतेन प्रयुक्तपाणिग्रहणोपचारौ कृतविवाह कर्म्माणौ प्रजानां पितरौ तौ उमामहेश्वरौ पद्मासनस्थाय पद्मासनोपविष्टाय पितृणां पितॄन् पितामहाय ब्रह्मणे। पितामहो विरिञ्चौ स्यात् तातस्य जनकेऽपि च इति विश्वः। पितृव्यमातुलमातामह इति निपातनात् साधु। प्रणेमतु

¹ प्रयुक्तः पाणिग्रहणम् एव उपचारः ययोः तौ।

पत्रान्तलग्नैर्जलबिन्दुजालै
रारुष्टमुक्ताफलजालशोभम्।
तयोरुपर्य्यायतनालदण्डम्
आधत्त लक्ष्मी कमलातपत्रम्[1] ॥ ८९ ॥

द्विधा प्रयुक्तेन च वाङ्मयेन
सरस्वती तन्मिथुन नुनाव।
संस्कारपूतेन वर वरेण्य
बधू सुखग्राह्यनिबन्धनेन ॥ ९० ॥

अवश्यकर्त्तव्यम इत्यर्थ । इषेरिच्छार्थादनीयर्प्रत्यय । आर्द्रा
क्षतारोपणम् अन्वगृताम ॥ ८८ ॥

पत्रान्तेति। लक्ष्मी श्रीदेवी पत्रान्तेषु दलप्रान्तेषु लग्न
जलबिन्दुजाले आकृष्टा आहृता मुक्ताफलजालेन प्रान्त
लम्बिना मुक्ताकलापेन या शोभा सा येन तत् तथोक्तम आयत
... नालम् एव दण्ड यस्य तत् कमलम् इव आतपत्र तत्
तयो उपरि आधत्त दधौ ॥ ८९ ॥

द्विधेति। अथ सरस्वती वाग्देवी द्विधा संस्कृतप्राकृत
रूपेण द्वैविध्येन प्रयुक्तेन उच्चारितेन वाङ्मयेन शब्दजालेन तत
मिथुन ननाव तुष्टाव। णु स्तुताविति धातोर्लिट्। केन कमित्याह,
संस्कारेति। संस्कारेण शास्त्रव्युत्पत्त्या पूतेन प्रकृतिप्रत्ययविभाग
शुद्धेन संस्कृतेन इत्यर्थ । वरेण्य वरणीय श्लाघ्यम् इत्यर्थ । वृञो
रौणादिक एण्यप्रत्यय । वर वोढार शिव सुखेन ग्राह्य सुबोध
निबन्धेन रचना यस्य तेन वाङ्मयेन प्राकृतभाषया इत्यर्थ वधू
नुनाव इत्यनेन सम्बन्ध ॥ ९० ॥

1 आतपात त्रायते इति आतपत्रम्।

तौ सन्धिषु व्यञ्जितवृत्तिभेदं
रसान्तरेषु प्रतिबद्धरागम्।
अपश्यतामप्सरसां मुहूर्त्तं
प्रयोगमाद्यं ललिताङ्गहारम्॥ ९१॥

ताविति। तौ दम्पती सन्धिषु मुखादिनिर्वहणान्तेषु पञ्चसन्धिषु। तदुक्तं दशरूपके, 'मुखं प्रतिमुखं गर्भं सावमर्षोपसंहृति' इति। व्यञ्जितवृत्तिभेदं स्फुटीकृतकौशिक्यादिवृत्तिविशेषं रसानुगुणेनेति शेषः। तदुक्तं भूपालेन, कौशिकी स्यात्तु शृङ्गारे रसे वीरे तु सात्वती। रौद्रबीभत्सयोर्वृत्तिर्नियतारभटी पुनः। शृङ्गारादिषु सर्व्वेषु रसेष्विष्टा तु भारती। तथा कौशिक्यारभटी चैव सात्वती भारती तथा। चतस्रो वृत्तयो ज्ञेया तासु नाट्यं प्रतिष्ठितम्' इति। रसान्तरेषु शृङ्गारादिरसभेदेषु। शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः' इत्यमरः। शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। बीभत्साद्भुतशान्ताश्च रसाः पूर्व्वैरुदाहृताः' इति। प्रतिबद्धरागं प्रतिनियमेन प्रबद्धललितादिरागं यस्मिन् रसे। यो रागो विहितस्तन्नियमेन प्रयुक्तरागम् इत्यर्थः। यथाह काहलः रौद्रेऽद्भुते तथा वीरे पूरागेण प्रगीयते। शृङ्गारहास्यकरुणाः स्त्रीरागेण प्रकीर्त्तिताः। भयानके च बीभत्से शान्ते गेयो नपुंसकः॥ इति। ललिताङ्गहारं मधुराङ्गविक्षेपम्। 'अङ्गहारोऽङ्गविक्षेपे' इत्यमरः। आदौ भवम् आद्यं रूपकान्तरप्रकृतिभूतम् इत्यर्थः। तदुक्तम् 'आहुः प्रकरणादीनां नाटकं प्रकृतिं बुधाः' इति अप्सरसाम् उर्व्वश्यादीनां प्रयुज्यते इति प्रयोगः रूपकं नाटकम् इत्यर्थः। आद्यमिति विशेषणात् तं मुहूर्त्तम् अपश्यतां दृष्टवन्तौ। 'पाघ्राध्मास्था' इत्यादिना दृशो पश्यादेशः॥ ९१॥

देवास्तदन्ते हरमूढभार्य्यं१
किरीटबद्धाञ्जलयो निपत्य।
शापावसाने प्रतिपन्नमूर्त्तेः२
ययाचिरे पञ्चशरस्य सेवाम्॥ ९२॥

तस्यानुमेने भगवान् विमन्यु
व्यापारमात्मन्यपि सायकानाम्।
कालप्रयुक्ता खलु कार्य्यविद्भि
विज्ञापना भर्त्तृषु सिद्धिमेति॥ ९३॥

देवा इति। देवा इन्द्रादय तदन्ते तस्य प्रयोगदर्शनस्य अवसान ऊढभार्य्यं परिणीतदार हर किरीटेषु बद्धा अञ्जलय येषा ते तथोक्ता सन्त निपत्य प्रणम्य शापावसाने प्रतिपन्नमूर्त्ते लब्धशरीरस्य 'परिणेष्यति पार्व्वती यदा' इत्या दिना शापस्य पार्व्वतीपरिणयान्तत्वात् इत्यर्थ। पञ्चशरस्य [illegible] कर्त्तु सेवा ययाचिरे, पुन समासादितशरीरस्य तस्य सेवा स्वीक्रियतामिति प्रार्थयामासु इत्यर्थ। 'दुह्याचपच्' इत्यादिना द्विकर्म्मकत्वम्॥ ९२॥

तस्येति। विमन्यु विगतक्रोध भगवान ईश्वर आत्मनि अपि तस्य कामस्य सायकाना व्यापारम अनमेने। तथाहि कार्य्यविद्भि कार्य्यज्ञै अथवा कालविद्भि अवसरज्ञै काले योग्यावसरे प्रयुक्ता अनुष्ठिता भर्त्तृषु स्वामिषु विषये विज्ञापना सिद्धिम एति खलु सफला भवतीत्यर्थ। अयमेवास्य स्मरसेवास्वीकार इत्यात्मन्यपि तत्सायकव्यापारमङ्गीकृतवानिति॥ ९३॥

१ ऊढभार्य्यम् ऊढा भार्य्या येन स तम्।

२ प्रतिपन्नमूर्त्ते प्रतिपन्ना मूर्त्ति येन स तस्य।

अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामाददानः करेण।
कनककलशयुक्तं भक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात्॥९४॥
नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृताक्षेपमीशः।

अथेति। अथ इन्दुमौलिः ईश्वरः तान् विबुधगणान् विसृज्य क्षितिधरपतिकन्यां पार्व्वतीं करेण आददानः कनककलशयुक्तं मङ्गलार्थम् अन्तर्निहितहेममयपूर्णकुम्भं भक्त्या पद्मादिरचनया तस्याः शोभया सनाथं सहितम् इत्यर्थः क्षितिविरचितशय्यं क्षितिविरचिता स्थण्डिलकल्पिता शय्या रुद्ध यस्मिन् तत् तथोक्तं कौतुकागारम् आगात् शय्यागृहं जगाम। अत्राश्वलायनः 'अत ऊर्द्धमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणौ स्याताम्' इति। अत ऊर्द्धं विवाहात् ऊर्द्धम् आ त्रिरात्रात् इति शेषः। त्रिरात्रं द्वादशरात्रं वा इति स्मरणात्। तथा कामशास्त्रेऽपि, 'अथ परिणयरात्रौ प्रक्रमन्नेव किञ्चित् तिसृषु च रजनीषु स्वप्रभावा दुनोति। त्रिदिनमिह न भिन्द्यात् ब्रह्मचर्य्यं न चास्या हृदयमननुरुध्य स्वेच्छया नर्म्म कुर्य्यात्॥ ९४॥

नवेति। तत्र कौतुकागारे ईशः ईश्वरः नवपरिणयेन नवोद्वाहेन या लज्जा सा भूषणं यस्याः ताम् अत एव तेन ईश्वरेण कृताक्षेपं कृताकर्षणाम् उन्नमितम् इति यावत् वदनम् अपहरन्तीं साचीकुर्व्वतीम्, अयं लज्जानुभावः। अनुभावान्तरमाह शयनसखीभ्यः अपि शयने सहशयिनीभ्यः अपि न दृष्ट सहचरीभ्योऽपि इत्यर्थः कथञ्चित् कष्टेन दत्तवाचं दत्तोत्तरं।

अपि शयनसखीभ्यो दत्तवाच कथञ्चित्
प्रमथमुखविकारैर्हासयामास गूढम् ॥ ९५ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
उमापरिणयो नाम सप्तम सर्ग. ।

गौरा प्रमथा भृङ्गिकिरीटिप्रभृतय हास्यरसाधिदेवत। पशु पत पारिषदा । यथाह भरत, 'शृङ्गारो विष्णुदेवत्यो हास्य प्रमथदैवत ।' इति, 'प्रमथा स्यु पारिषदा ' इत्यमर तषा मुखविकारे मुखविकृतचेष्टितै गूढम अप्रकाश हासयामास, हास्य उपायैर्लज्जामपाकर्तु प्रवृत्त इत्यथ । यथाह गोनर्द 'हासेन मदना नर्म वचसा लज्जिता प्रियाम । विलम्बनञ्च कुर्यात निपुणाश्च सखीजने ॥' इति ॥ ९५ ॥

इति श्रीपद महोपाध्याय कोलाचल मल्लिनाथ सूरिविरचित
कुमारसम्भवव्याख्याया सञ्जीवनीसमाख्याया सप्तम सर्ग ।